THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

No. 29

---

THE

# VṚITTI DĪPIKĀ

---

GOVERNMENT SANSKRIT LIBRARY,

BENARES

---



1930

Price Rs. 1-2.

THE

PRINCESS OF WALES

# SARASWATI BHAVANA TEXTS

*No. 29.*

EDITED BY

GOPĪ NĀTHA KAVIRĀJA

THE

# VṚITTI DĪPIKĀ

*Printed by Jai Krishna Das Gupta*
*At the Vidya Vilas Press, Gopal Mandir Lane,*
*Benares City.*

1930

# वृत्तिदीपिका

## मौनिश्रीकृष्णभट्ट विरचिता ।

काशिकराजकीयप्रधानसंस्कृतपाठशालायां साहित्यशास्त्रा-
ध्यापकेन व्याकरणसाहित्याचार्य्येण भारद्वाज इत्यु-
पाख्य-गङ्गाधर-शास्त्रिणा सम्पादिता ।

---

THE

# VṚTTI DĪPIKĀ

By

MAUNI S'RĪ KṚṢṆA BHAṬṬA

EDITED WITH INTRODUCTION ETC,

BY

Vyakarana Sahityacharya

PT. GAṄGĀDHARA S'ĀSTRĪ BHĀRADVĀJA

Professor, Govt. Sanskrit College,

BENARES.

1930

श्रीसङ्कष्टनाशिन्यैनमः ।

# प्रस्तावना ।

§१ प्रेक्षावतामीक्षणप्रवृत्त्यर्थं प्रागनुबन्धचतुष्टयप्रदर्शनं कर्तव्यम् । तच्च

ग्रन्थ प्रयोजनम्

प्रायेण टीकाकारा आचरन्ति । ग्रन्थकृतस्तु अनुबन्धचतुष्टयमध्ये यस्य यस्य ज्ञानं दुरूहं तस्य तस्यैव प्रदर्शनं कुर्वन्ति । परिशेषास्तु स्वत एव प्रतीतिविषया भवन्ति । बहवो ग्रन्थकारा मङ्गलाचरणश्लोक एव दुर्ज्ञेयानुबन्धप्रदर्शनं कुर्वन्ति । तथैवात्रापि ग्रन्थकृता मौनिश्रीकृष्णभट्टेन दुर्ज्ञेयत्वात् मङ्गलाचरणोत्तरं ग्रन्थप्रयोजनं प्रदर्शितम् । "मोक्षमुख्योपायात्मज्ञानं सकलजनाभिलषितं, तच्च तत्त्वमस्यादिमहावाक्यार्थबोधजन्यम् । शाब्दबोधे च वृत्तिज्ञानजन्योपस्थितिर्हेतुः । अतस्तदर्थं वृत्तिज्ञानं कर्तव्यमिति फलितम्" । अयञ्च तत्रत्य ग्रन्थकृद्भावनिष्कर्षः ।

§२ वृत्तिनिरूपकेषु सत्स्वपि बहुषु ग्रन्थेषु अयं वृत्तिदीपिकाग्रन्थस्तान्

अन्यग्रन्थेभ्यो-ऽस्यवैशिष्ट्यम्

सर्वानप्यधरीकरोति । प्रकरणदशकसमन्वितेऽस्मिन्ग्रन्थे समासतो वृत्तित्रैविध्यनिरूपणादेव कृतार्थीभूतेभ्यो ग्रन्थेभ्यो विशेषविषयता तु धीमज्जननयनविषयतां गतैव । ननु वृत्तित्रयप्रकरणाऽतिरिक्तानि धात्वर्थनिरूपणादीन्यत्राऽनर्थकानीति चेन्न । धात्वादिषु वृत्तेर्विद्यमानत्वात् । तां विना तेषु शाब्दबोधानुदयप्रसङ्गाच्च ।

§३ "वर्तते शब्दोऽर्थे प्रवर्त्ततेऽनयेति वृत्तिः । बाहुलकात् करणे क्तिन्

वृत्तिपदार्थ निरूपणम्

प्रत्ययः" । स्वनिर्मितत्रिवेणिकाऽऽख्ये ग्रन्थे आशाधरभट्टेनेत्थमवयवार्थमूलकं वृत्तिलक्षणं कृतम् । "शाब्दबोधहेतुशब्दाऽर्थोपस्थित्यनुकूलशब्दतदर्थसम्बन्धो वृत्ति"रिति वृत्तिदीपिकाकर्तुर्मौनिश्रीकृष्णभट्टस्य मतम् । साहित्यदर्पणे वृत्तिशब्दस्थाने शक्तिशब्दो दृश्यते, यद्यपि वृत्तित्रयभेदान्तर्निविष्टा प्राथम्येनोपस्थिता वृत्तिरभिधापरपर्याया शक्तिपदवाच्या; तथापि

"वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः ।
व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः" ॥ २-३ ॥

इति वदतो विश्वनाथकविराजस्य वृत्त्यर्थ एव शक्तिशब्दप्रयोग इति स्फुटमवगम्यते । "*शक्तिलक्षणाऽन्यतरसम्बन्धो वृत्तिः । व्यञ्जनाया अस्वीकारात् । तथाहि—गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिप्रतीतिर्मानसी न शब्दजन्ये"ति नैयायिकमतम् ।

"अन्त्या वृत्तिर्व्यञ्जना ध्वन्यालोककर्तुः श्रीमदानन्दवर्द्धनाचार्यस्यैवोपज्ञाविषया" इति विदुषां मतम् । सा च व्यञ्जना वैयाकरणनव्यैरपि स्वीकृता ।

अथाऽत्र ग्रन्थे प्रधानत्वेन प्रतिपादितानां केषाञ्चिद्विषयाणामुल्लेखः क्रियते ।

§४ मीमांसकमते सङ्केतजन्यग्रहविषयमभिधेव शक्तिः । सङ्केतश्च—

शक्तेर्लक्षणम् एतत्पदजन्यत्वप्रकारतानिरूपितैतदर्थबोधविशेष्यताशालीश्वरेच्छा । एतावता शक्तिसङ्केतयोर्भेदः प्रतिपादितः । शक्तिसङ्केतयोः कार्यकारणभावोऽपि मीमांसकमते फलितः ।

नैयायिकनये तु लाघवात् सङ्केत एव अभिधा, न पदार्थान्तरम् । तत्र प्राच्यनैयायिकमते—अस्मात्पदादयमर्थो बोद्धव्य इत्याकारिका, अर्थविशेष्यिका—एतत्पदममुमर्थं बोधयत्वित्याकारिका पदविशेष्यिका वेश्वरेच्छा शक्तिः । तथा च नैयायिकमते गगरीत्याद्यपभ्रंशशब्दा नाभिधायकाः । "न म्लेच्छितवै नाऽपभाषितवै" इत्यादिश्रुतिविरोधात् । तत्र सङ्केतसत्वेऽपि विदुषां गगर्यादिशब्दाच्छाब्दरूपफलाऽभावेनाऽपभ्रंशे तादृशेश्वरसङ्केताऽभावात् । एवञ्चेत् अपभ्रंशादिशब्देषु शक्त्यभावे कथं शाब्दबोध इति सन्देहे जायमाने तत्र शक्तिभ्रमाच्छाब्दबोधो भवतीति नैयायिकसमाधानम् । वैयाकरणानां मते तु अपभ्रंशादिशब्देष्वपि शब्दशक्तिप्रमयैव शाब्दबोधः । शब्दशक्तिश्चार्थबोधकारणतारूपः शब्दनिष्ठः स्वरूपसम्बन्धविशेष इति प्राञ्चो वैयाकरणाः । नव्यास्तु पदपदार्थयोः सम्बन्धान्तरमेव शक्तिर्बोध्यबोधकभावापरपर्यायेति वदन्ति । ईश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमिति विनिगमनाविरहादतिरिक्तैव शक्तिरिति नैयायिक-

---

* शक्तिरभिधेति न पदार्थान्तरम् ।

नव्याः। मिश्रमतेऽपि—अपभ्रंशादिषु न शक्तिः। मिश्रनैयायिकयोरुभयोरपि मतं वृत्तिदीपिकाकर्त्रा मौनिश्रीकृष्णभट्टेन खण्डितम्। ग्रन्थकृन्मते—अपभ्रंशादिशब्देष्वपि ईश्वरेच्छायाः स्थितेस्तदर्थबोधेन तत्रापि शक्तिरिष्टैव। वैयाकरणमते बोधकत्वमेव शक्तिः। लक्षणैव स्वीकार्या न तदतिरिक्ता व्यञ्जनेति वदतां नैयायिकानां मतं मौनिश्रीकृष्णभट्टेन खण्डितम्। युक्तिबलैः प्रतिपादिता च व्यञ्जनायाः शक्तिलक्षणाभ्यामतिरिक्तता। शब्दनिष्ठतत्तदर्थविषयकधीजनकत्वमेव शक्तिरिति ग्रन्थकृन्मतम्। शक्तिज्ञानहेतुषु व्याकरणोपमानादिषु मुख्यो व्यवहारत एव शक्तिग्रह इति ग्रन्थकृत्। शक्त्याश्रयविषयेऽपि विदुषां मतभेदो दृश्यते। गवादिपदानां *गोत्वे शक्तिः। "†विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशे‡षणे" इतिन्यायात्। व्यक्तेस्तु जातिराश्रयं विनाऽनुपपन्नेत्येवं रूपार्थापत्त्या लाभ इति मीमांसकमतम्। अर्थापत्तिश्च परस्परविरुद्धत्वेनावभासमानहेतुद्वयसाध्यानुमितिरित्यन्यत्र विस्तरः। दीक्षितोक्तमपि ग्रन्थकर्त्रा एतत्प्रसङ्गत एव खण्डितम्। गोपदस्य गोत्वे शक्तिर्व्यक्तौ लक्षणेति मण्डनमिश्राः। तत्र हेतुरपि प्रदर्शितः। यथा—

"जातावस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे"॥ इति।

अस्तित्वनास्तित्वे उत्पादविनाशौ। कुब्जशक्तिवादिमते—जातौ व्यक्तौ च शक्तिः। परन्तु जातिविषयकत्वेनैव ज्ञाता शक्तिर्व्यक्तिविषयकशाब्दबोधे कारणम् एतन्मतं ग्रन्थकर्त्रा खण्डितम्। प्राच्यनैयायिकमते जातौ व्यक्तौ वैशिष्ट्ये च शक्तिः। नव्यनैयायिकमते तु गव्येव शक्ति र्न तु गोत्वेऽपि गौरवात् इति। प्राभाकरमते—"कार्यान्विते पदानां शक्ति"रिति। ग्रन्थकर्त्रा दीक्षितमतपदचातुर्विध्यं विलिख्य तत्र दोषोद्भावनं कृतम्। तत्प्रसङ्गत एव वैयाकरणनव्यमतमपि तेन दूषितम्। एवञ्च मणिकृन्मतमुपन्यस्य तदपि खण्डितं मौनिश्रीकृष्णभट्टेन।

---

* जाताविति भावः। † व्यक्तिम्। ‡ जातौ।

लक्षणा-लक्षणम्

§५ लक्षणानिरूपणे ग्रन्थकर्त्रा परकीयमतखण्डनं कृत्वा "स्वशक्यसम्बन्धो लक्षणा" इत्याकारकं लक्षणाया लक्षणं कृतम् । व्याख्यातञ्च स्वं लाक्षणिकं पदं तस्य यच्छक्यं तत्सम्बन्धो *लक्षणेत्यर्थ इति । सा द्विविधा–गौणी शुद्धा च । इत्थं लक्षणाया द्वैविध्यमपि प्रतिपादितम् । जहत्स्वार्थाऽजहत्स्वार्थाभ्यां तयोर्द्वैविध्यमपि निरूपितं ग्रन्थकर्त्रा । तत्र प्राच्यमते गौणी अजहत्स्वार्था तु नास्त्येव । नव्यमते गौण्यपि अजहत्स्वार्था भवति । लक्षितलक्षणाऽपि ग्रन्थकृता स्वीकृता । वेदान्तिस्वीकृता तत्त्वमसीत्यादिस्थलेषु चरितार्थाऽपि जहदजहल्लक्षणा ग्रन्थकृता खण्डिता । तन्मते जहत्स्वार्थयैव निर्वाहात् ।

प्रकृतत्वाल्लक्षणाविषये किञ्चिल्लिख्यते—नीलो घट इत्यादिस्थलेषु शक्तिग्रहहेतूनामभ्यर्हितत्वात् प्रथमोपस्थितव्याकरणशासनात् "गुणवचनेभ्यो मतुपो लुगिष्ट" इति वार्तिकेन मतुपो लुकि नील इत्येतावतैव मतुबर्थाऽभिधानानन्तरं लक्षणामन्तरेण नीलवर्णो घट इत्याकारकशाब्दबोधे जाते, तथा च शक्तिग्रहहेत्वन्यतमकोशादपि वैयाकणसिद्धान्तमूलके "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इत्येतादृशप्रमाणे जगरूकेऽपि नैयायिका आलङ्कारिकाश्च "एवं विधस्थलेषु लक्षणयैव नीलवर्णो घट इत्याकारकाः शाब्दबोधा जायन्ते" इति मन्यन्ते । अत्र ते एव प्रष्टव्याः ।

व्यञ्जना लक्षणम्

§६ व्यञ्जनानिरूपणे ग्रन्थकृता "शक्तिलक्षणाद्यजन्यप्रतीतिजनकः शब्दनिष्ठो व्यापारो व्यञ्जना" इति व्यञ्जनालक्षणं कृतम् । नैयायिकानां मतमपि वैशद्येन प्रतिपाद्य खण्डितम् । युक्तिप्रमाणाभ्यामतिरिक्ता व्यञ्जनावृत्तिः संस्थापिता मौनिश्रीकृष्णभट्टेन ।

धात्वर्थ-विचारः

§७ धात्वर्थनिरूपणे "यत्नाऽतिरिक्तः फलानुकूलो व्यापारो धात्वर्थ" इति गुरुमतानुयायिनः । मण्डनमिश्रमताऽनुयायि ( मीमांसक ) मते फलमेव धात्वर्थः । एतन्मतं ग्रन्थकृता खण्डितम् । प्राचीननैयायिकमतन्तु "धातोः केवलव्यापारे शक्तिः, फलं कर्मप्रत्ययार्थः लाघवात्" इति । खण्डितमेतदपि ग्रन्थकृता । वैयाकरणमते "फलानुकूलो

---

* सर्वा अपि लक्षणा–अन्वयानुपपत्त्या तात्पर्यानुपपत्त्या वा कल्प्यन्ते ।

व्यापारो धात्वर्थः" इति । नैयायिकमते च वा इत्यादिनिपातानामपि वाचकत्वमेव । कृञो यत्नमात्रमर्थः इति । एतन्मतं ग्रन्थकारेण खण्डितम् ।

तिङर्थ-विचारः

§८ तिङर्थनिरूपणे—आख्यातस्य यत्न एव शक्यः इति प्रमाणपुरस्सरं नैयायिकमतमुपन्यस्य ग्रन्थकृता खण्डितम् । "आख्यातस्य भावना वाच्या; कर्तृत्वादौ लक्षणेति" मीमांसकमतमपि खण्डितं मौनिश्रीकृष्णभट्टेन ।

सनाद्यर्थ विचारः

§९ सनाद्यर्थनिरूपणे नैयायिकमतखण्डनपूर्वकं सन्प्रत्ययाऽर्थो निरूपितः । तथा च क्यजादीनामर्थनिरूपणोत्तरं—गदाधरप्रभृतीनां मतं खण्डितम् । एवं यङ्द्योत्याऽर्थोल्लेखं कृत्वा णिजर्थः प्रदर्शितः। क्त्वाऽर्थाभिधानं तथा च प्राभाकरमते क्त्वावाच्यं प्रदर्शितम् । नैयायिकनव्यसम्मतं क्त्वावाच्यं प्रदर्श्य खण्डितं तन्मौनिश्रीकृष्णभट्टेन ।

समासार्थ विचारः

§१० समासार्थनिरूपणे समासलक्षणं कृत्वा जयरामादिमतं ग्रन्थकृता खण्डितम् । समासे शक्तिरिति वैणाकरणाः। "समासे समुदाये न शक्तिः। राजपुरुष इत्यादौ राज्ञः पदस्य राजसम्बन्धिनि लक्षणयैवोपपत्तेरिति नैयायिकनव्याः। एतन्मतं भावानन्दजयरामादिमतमपि तत्तत्प्रसङ्गतो ग्रन्थकृता खण्डितम् ।

स्त्रीप्रत्ययार्थ विचारः

§११ स्त्रीप्रत्ययार्थनिरूपणे टाबादीनां स्त्रीत्वस्य द्योतकत्वं संस्थाप्य "प्रातिपदिकार्थ एव स्त्रीत्व" मिति मतं दूषितम् ग्रन्थकृता । कुत्रचित् स्त्रीप्रत्यये स्त्रियाः भार्यात्वेन विशेष्यतया बोधो, यथा शूद्रीत्यादौ भार्यात्वेन बोधः" इति स्त्रीत्वञ्च विलिख्य क्वचिन्च स्त्रीप्रत्यया नार्थबोधका इति च परकीयमतं प्रदर्श्य खण्डितं ग्रन्थकारेण । तत्प्रसङ्गत एव गदाधरादिमतञ्च खण्डितम् । ततो वैयाकरणमतमपि प्रदर्श्य वैयाकरणनव्यमतं खण्डितं मौनिश्रीकृष्णभट्टेन ।

तद्धितार्थ विचारः

§१२ तद्धितार्थनिरूपणे ग्रन्थकारेण स्वमतमेव प्रतिपादितम् । न कस्यचिन्मतं खण्डितम् । तत्रादौ ढगन्ताग्नेयशब्दार्थनिरूपणोत्तरं वतिप्रत्ययान्तशब्दयुक्तवाक्यानां स्थलविशेषेषु शाब्दबोधप्रकाराः प्रदर्शिताः । मयट्प्रत्ययान्तशब्दस्यार्थनिरूपणञ्च कृतं ग्रन्थकारेण ।

स्फोट विचारः

§१३ एवं स्फोटनिरूपणे "स्फुटति प्रकाशतेऽर्थाँ यस्मादिति स्फोटः" इति व्युत्पत्त्या नैयायिकाऽस्वीकृतस्फोटसत्तां प्रतिपाद्य स्फोटस्याष्टविधत्वं भाष्यकारप्रभाकरभट्टमतानुसारेण वर्णनित्यत्वमपि प्रतिपादितम् । अष्टसु स्फोटेषु अन्तिमास्त्रयस्फोटा वोपदेवसम्मताः ।

यद्यप्यत्राऽऽलोचनीया विषया बहवः सन्ति, तथापि विस्तरभिया मया साम्प्रतमेतावतैव विरम्यते ।

इदानीं ग्रन्थकारविषये किञ्चिल्लिख्यते ।

ग्रन्थकार परिचयः

§१४ वृत्तिदीपिकाकर्ता मौनिकुलसम्भूतो गवर्द्धनभट्टात्मजरघुनाथभट्टसुतः श्रीकृष्णभट्ट इति तु वृत्तिदीपिकान्ते लिखितं वर्तते । यत्तु "श्रीकृष्णभट्टपितामहो गोवर्धनभट्टः तर्कभाषाटीकाया न्यायबोधिन्याश्च प्रणेता" इति वादार्थसंग्रहादौ वाक्ये इत्युपाव्हमहादेवशर्मादिमतम् । तच्च प्रामादिकम् । अयं गोवर्द्धनभट्टः न्यायबोधिन्या प्रकाशाख्यतर्कभाषाटीकायाश्च कर्तुर्गोवर्द्धनभट्टादर्वाचीनोऽतिरिक्त एव । एतद्विषये काशीस्थराजकीयप्रधानसंस्कृतविद्यालयाध्यक्षैर्माननीयप्रभुवरश्रीमद्गोपीनाथकविराजमहोदयैः सुविशदं विवेचितम् । अत एवात्र तद्विषये विशेषरूपेण प्रमाणोल्लेखो न कृतः ।

वृत्तिदीपिकाकर्तुर्मौनिश्रीकृष्णभट्टस्य माता जानकी इति तु तत्कृतस्फोटचन्द्रिकास्थेन—

"पित्रोः पादयुगं नत्वा जानकीरघुनाथयोः ।
मौनिश्रीकृष्णभट्टेन तन्यते स्फोटचन्द्रिका ॥

इति मङ्गलाचरणपद्येन ज्ञायते । अयं मौनिश्रीकृष्णभट्टः (१७००) संख्यके ख्रीस्ताऽब्दे आसीदिति प्राच्यतत्वविदां विदुषां परामर्शः । अयं शेखरकारान्नागेशभट्टादर्वाचीन इति तु तत्कृते लघुविभक्त्यर्थनिर्णये शब्देन्दुशेखरमञ्जूषयोर्नामदर्शनात् प्रतिभाति ।

अयं न्यायव्याकरणमीमांसासु कृतश्रम आसीदिति तु तत्कृतलघुविभक्त्यर्थनिर्णये मङ्गलाचरणोत्तरं—

तर्कव्याकृतिमीमांसा परिशीलनशालिना ।
मौनिश्रीकृष्णभट्टेन विभक्त्यर्थौ विविच्यते ॥ इति

प्रतिज्ञात्मकेन पद्येन स्फुटमवगम्यते । मौनिश्रीकृष्णभट्टस्य पितू रघुनाथभट्टस्य चत्वारः पुत्रा आसन्निति मौनिजयकृष्णकृतया स्वरवैदिकीटीकया सुबोधिन्या अवसीयते । तत्र च यथा--

वभूवुस्तस्य चत्वारस्तनयाः सुनया बुधाः ।
महादेवाभिधः श्रेष्ठो महाभाष्यसुभावितः ॥
रामकृष्णो द्वितीयोऽसौ रामकृष्णाऽङ्घ्रिसेवकः ।

तृतीयो जयकृष्णोऽस्मि श्रीकृष्णायास्तु सूद्भवः ।

अत्र चतुर्थपुत्रस्य स्फुटतो नामाऽदर्शनादपि मौनिरघुनाथभट्टस्य चतुर्थपुत्रो मौनिश्रीकृष्णभट्ट इति अनुमीयये । पूर्वलिखितपाठो निर्णयसागरमुद्रितस्य पुस्तकस्य । व्यङ्कटेश्वरमुद्रितपुस्तके तु अन्तिमचरणं श्रीकृष्णायास्तनुद्भवः" एतादृशं दृश्यते । सन्देहोद्विग्नचित्तेन मया सरस्वतीभवनाख्ये राजकीयपुस्तकालयेऽपि प्राचीनलिखिता सुबोधिनी दृष्टा । तत्रापि "श्रीकृष्ण" अत उत्तरस्थान्यक्षराणि त्रुटितानि सन्ति । मम मते तु तत्र "श्रीकृष्णो यदनूद्भव इति पाठः प्रतिभाति ।

मौनिश्रीकृष्णभट्टरचिता ग्रन्थास्त्वेते--स्फोटचन्द्रिका, लघुविभक्त्यर्थनिर्णयः। द्वावपीमौ ग्रन्थौ गुजरातीमुद्रणालये मुद्रितौ । वृत्तिदीपिका तु इयमेव पाठकमहोदयानां करतलस्थिता । शब्दाऽर्थतर्कामृताऽख्यं पुस्तकमपि मौनिश्रीकृष्णभट्टप्रणीतमिति तत्कृतायां स्फोटचन्द्रिकायां "विस्तरस्तु मत्कृतशब्दार्थतर्कामृते द्रष्टव्य" इति दर्शनात् प्रतीयते । परन्त्वेतत्पुस्तकं साम्प्रतं न लभ्यते ।

§१५ वृत्तिदीपिकासंशोधनार्थं मया सरस्वतीभवनाख्यात् काशिकराजकीयसंस्कृतपुस्तकालयात् पुस्तकद्वयमासादितम् ।

पुस्तक विवरणम्

तदेवात्र क चिन्हितं, ख चिन्हितञ्च । क चिन्हितपुस्तकान्ते (१८६४) तमे वैक्रमसंवत्सरे लिखितमित्यस्ति । ख चिन्हितपुस्त-

कान्ते तु संवत् (१८३) एतदनन्तरस्थोऽङ्को भग्नपत्रत्वान्न दृश्यते । अथ च (३०) आरभ्य (३९) संख्यास्वन्यतमा स्यादित्यनुमीयते । पुस्तकद्वयमपि प्रायः शुद्धमेव वर्तते ।

धन्यवादाः §१६ यैश्च कृपयाऽस्मिन् कार्ये प्रवर्तितोऽहम् । यत्साहाय्येन सम्पन्नं चेतत्कर्म, तेषां माननीयप्रभुवरश्रीमद्गोपीनाथकविराजमहोदयानामुपकारभारभुग्नोऽहं कैरपि शब्दैस्तदभिनन्दनं कर्तुं न समर्थोऽस्मि । निर्व्याजकारुणिकानां तेषां कृपाकटाक्षधारा सततमास्तामित्यनवरतं प्रार्थये ।

यैश्चास्मद्सुहृद्वर्यैः प्रियसतीर्थ्यैः काशिकराजकीयपुस्तकालयसरस्वतीभवनाऽध्यक्षैः साहित्याचार्यसाहित्यवारिधिकविवर पं० श्रीनारायणशास्त्रिमहोदयैः सर्वतो भावेन अस्य संशोधने साहाय्यं प्रदत्तमिति तेभ्यः शतशो धन्यवादानपर्यामि ।

एतन्मुद्रणावसरेऽस्मत्प्रियशिष्येण जोश्युपनामकशेषराजशर्मणा सविशेषं साहाय्यं प्रदत्तमिति मुदितमना अहं तस्योत्तरोत्तरं प्रतिभाविकाशो भवत्विति तस्मै शतश आशीर्वादान् वितरामि ।

अन्ते च स्थावरजङ्गमात्मकस्याऽस्य संसारस्य सृष्टिस्थितिप्रलयसम्पादयित्र्या यस्या अनुकम्पामन्तरेण कस्मिन्नपि कार्यजाते प्रवृत्तिरेव न सम्भवा, प्रारब्धस्य च कर्मणो निर्विघ्नपरिसमाप्तेस्तु का कथा? । यत्कृपयैवादः कार्यमपि निष्प्रत्यूहं समाप्तिमगमत्,

तस्या एव परमकरुणान्विताया भगवत्या आद्यायाः शक्तेः सरसिजानुकारौ चरणौ स्मारं स्मारं नमस्कृत्य विरमामि बहुविस्तरेणेति शम् ।

संशोधितेऽप्यवहितेन यथामतीह ग्रन्थे यदि स्खलितमक्षिपथाऽतिथि स्यात् ।
हंसोपमाः सुमनसो गुणमात्रलुब्धाः क्षाम्यन्तुतत् सहजकारुणिकत्ववश्याः ॥

राजकीय संस्कृत विद्यालयः
वाराणसी १९८६ वैक्रमे

विदुषां विधेयो
भारद्वाज गङ्गाधर शास्त्री

श्रीः ।

# वृत्तिदीपिकायाः प्रकरणसूची ।



---

श्रीः ।

# वृत्तिदीपिकाया विषयानुक्रमणिका ।

## १ अथ शक्तिनिरूपणम् ।

---

## २ लक्षणानिरूपणम् ।

## ३ अथ व्यञ्जनानिरूपणम्



## ४ धात्वर्थनिरूपणम्

---

## ५ तिङर्थनिरूपणम् ।

---

## ६ अथ सनाद्यर्थनिरूपणम् ।

## ७ अथ समासशक्तिनिरूपणम्।

---

## ८ अथ स्त्रीप्रत्ययाऽर्थनिरूपणम् ।

## ९ अथ तद्धितार्थनिरूपणम् ।



## १० स्फोटनिरूपणम् ।



समाप्तेयं विषयसूची ।

मौनिश्रीकृष्णभट्टविरचिता

# वृत्तिदीपिका ।

सजलजलदकालं सर्वलोकैकपालं,
व्रजयुवतिरसालं चन्दनाभ्यक्तभालम् ।
विहतदुरितजालं विश्वराजीवनालं
विलसितवनमालं नौमि गोपालबालम् ॥ १ ॥
ध्यात्वा व्यासं गुरुं नत्वा माधवेन्द्रसरस्वतीम् ।
मौनिश्रीकृष्णभट्टेन तन्यते वृत्तिदीपिका ॥ २ ॥

इह सकलजनाऽभिलषितमोक्षमुख्योपायात्मज्ञानस्य तत्त्वमस्यादिमहावाक्यार्थबोधजन्यत्वाच्छाब्दबोधे च वृत्तिग्रहजन्योपस्थितेर्हेतुत्वाद्वृत्तिर्निरूप्यते। सा च त्रिधा। शक्ति, लक्षणा, व्यञ्जना च । वृत्तित्वञ्च शाब्दबोधहेतुशब्दार्थोपस्थित्यनुकूलशब्दतदर्थसम्बन्धत्वम् । सङ्केतविशेषसम्बन्धेन वृत्तिपदत्वं वा। तत्र शक्तिः कः पदार्थ इति चेत्—सङ्केतजन्यग्रहविषयमभिधानाम पदार्थान्तरमिति मीमांसकाः । सङ्केतश्च—एतत्पदजन्यत्वप्रकारतानिरूपित एतदर्थबोधविशेष्यताशालीश्वरेच्छा ।

नैयायिकास्तु लाघवात् सङ्केत एवाभिधा न तु पदार्थान्तरम्। नच गगर्यादि शब्दा अपि अभिधायकाः स्युः, तथा च "न म्लेच्छितवै नापभाषितवै" इत्यादिश्रुतिविरोधः । तत्र सङ्केतसत्त्वेऽपि शास्त्रनिष्णातबुद्धीनां गगर्यादिशब्दाच्छाब्दरूपफलाभावेनापभ्रंशे तादृशेश्वरसङ्केताभावात् । ननु शाब्दसामान्ये

---

१ मुरलि ख० पु० पाठः ।
२ तत्वज्ञानस्य ख० पु० पाठः ।

शक्तिज्ञानस्य हेतुतया अपभाषिते शक्त्यभावे कथं शाब्दबोध इति चेन्न। शक्तिभ्रमात्। भ्रमप्रमासाधारण शक्तिज्ञानत्वेन हेतुत्वात्। ननु चैत्रशब्दादयमर्थो बोद्धव्य इत्यास्माकीनेच्छाविषयाणां चैत्रादिशब्दानामीश्वरसङ्केताभावेनाशक्तत्वापत्तिः। द्वादशाहकालीनपितृचरितनामत्वादिना नामवाच्य इत्याकारकेच्छया ईश्वरेण तादृशश्रुतिप्रणयनात्तत्रापीश्वरसङ्केतोऽस्तीति बोध्यम्।

ईश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमिति त्रिनिगमनाविरहादातिरिक्तैव शक्तिरिति नव्याः। अन्यतरपक्षपातिनी युक्तिर्विनिगमना।

मिश्रास्तु तादृशेच्छया भगवदुच्चरितत्वं शक्तिः। अपभ्रंशादयस्तु न तादृशेच्छया ईश्वरोच्चारिता इति न तेषु शक्तिरित्याहुः। तन्न। वेदस्थलाक्षणिकेषु "यजमानः प्रस्तरः" इत्यादिषु शक्त्यापत्तेः[1]। तादृशेश्वरसङ्केतितत्वं च साधुत्वम्। केचित्तु वृत्तिमत्त्वं साधुत्वमित्याहुः।

अत्रेदं वक्तव्यम्—सन्मात्रविषयिण्या ईश्वरेच्छाया अपभ्रंशेऽपि सत्त्वेन तत्रापि शक्तिरिष्टैव। यत्तु शास्त्रनिष्णातबुद्धीनां गगर्यादिशब्दाच्छाब्दरूपफलाभावेनापभ्रंशे तादृशेश्वरसङ्केतो नास्तीत्यूचुः[2]। तन्न साधुस्मरणं विनापि व्युत्पन्नानां बोधानुभवात् भवदुक्तसंस्कृतैरयमर्थो न बुद्धः किन्तु एतदुक्तभाषयेति व्युत्पन्नानामपि व्यवहाराच्च। एतेन अपभ्रंशेभ्यः साधुस्मरणादर्थबोध इत्यपास्तम्।

अव्युत्पन्नानां शक्तिभ्रमाद्बोध इत्यपि न। तत्तत्पद[3]पदार्थ-

---

१ ख० पु० वेदस्थलाक्षणिकेषु शक्त्यापत्तेरिति पाठः।
२ ख० पु० तादृशसङ्केतो नास्तीति पाठः।
३ तत्तत्पदार्थघटितेति ख० पु० पाठः।

घटितेश्वरेच्छाया घटादिपदवृत्तित्वेन गृहीतायाः विभिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वेन साधारणधर्मदर्शनाभावेन च गगरीपदादौ भ्रमानुपपत्तेः । यथा शुक्तिज्ञानाभावे[1] चाकचक्यादिदर्शनेन रजतभ्रमः ।

अथवाऽस्तु यथाकथञ्चिच्छक्तिभ्रमः, स कस्य ? सर्वव्यवहारकर्तुरीश्वरस्य, उत तदतिरिक्तस्य वा । नाद्यः, भ्रमत्वानुपपत्तेः । नान्त्यः, सर्गादौ तदतिरिक्तव्यवहारकर्तुरभावात् । न च सकलदेशशिष्टपरिगृहीतत्वाभावान्न तत्र शक्तिरिति वाच्यम् । दुश्च्यवनशब्दस्येन्द्रे शक्त्यनापत्तेः । शिष्टैस्तदप्रयोगात् । अत एव प्रकाशकृद् दुश्च्यवनादिशब्दानामप्रयुक्तदोषावसरे उदाजहार[2] ।

यदपि सङ्केतितत्वं साधुत्वमित्याद्युक्तं तदपि न । भवन्मते समासादौ प्रकृतिप्रत्ययसमुदाये च शक्त्यभावेनासाधुतापत्तेः । प्रत्येकशक्तिमादाय साधुत्वे च वाधते इत्यादिवद्वाधतीत्यस्यापि साधुतापत्तेः । द्योतकेष्वव्याप्तेश्च । औपसंदानिकी शक्तिरेव द्योतनेति चेत् उपसंदीयत इत्युपसंदानं समभिव्याहृतपदं तद्वृत्तिशक्त्युद्बोधकत्वमिति तदर्थसत्त्वेन निपातेषु शक्त्यभावाल्लाक्षणिकानामसाधुतापत्तेश्च । न च तेषामपि क्वचिच्छक्तिसत्त्वादस्त्येव साधुत्वमिति वाच्यम् । गौणीशब्दस्य गौण्यां शक्तिसत्त्वेन गव्यपि साधुत्वोपपत्तेः[3] ।

ननु किमिदं साधुत्वम् । यः शब्दो यत्रार्थे व्याकरणव्युत्पन्नः स तत्रार्थे साधुः । तद्व्युत्पन्नत्वग्रहश्च क्वचित्स्पष्टोपलभ्यमानव्याकरणात् क्वचिच्छिष्टप्रयोगकोशादिभिरनुमानात् । तस्य च वाहुल-

१ शुक्तित्वेन शुक्तिज्ञानाभाव इति ख० पु० पाठः ।
२ ख० पु० अधिकः पाठः एष दुश्च्यवनं नौमीत्याद्यनुकरणे तु तस्यादोषत्वमिति तत्रैव स्फुटम् ।
३ साधुत्वापत्तारिति ख० पु० पाठः ।

कादिना संग्रहः । एवं लाक्षणिकेऽपि । यद्वा लक्षणास्थले प्रथमं शक्यार्थबोधस्यावश्यकतया तमर्थमादाय साधुत्वोपपत्तेः । अतएव गङ्गापदस्य तीरपरत्वेऽपि प्रथमोपस्थितान्तरङ्गार्थमादाय स्त्री-प्रत्ययादिः सङ्गच्छते । एतादृशसाधुत्वज्ञानस्य न शाब्दबोधे कारणत्वम् । तदजानतामपि बोधात् । न वा साधुत्वनिश्चयस्य प्रतिबन्धकत्वम् । तत्सत्त्वेऽपि संस्कृतमात्रविदुषां प्राकृतादितोऽपि बोधात् । विदुषामपि "अयि पिहुलं जलकुंभ" मित्यादिभाषातः बोधस्य सर्वानुभवसिद्धत्वाच्च ।

नचेदृशसाधुत्वस्य कोपयोगः ? एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति, साधूनेव प्रयुञ्जीतेत्यादिबोधितपुण्यजनने तदुपयोगः । एवञ्च पुण्य जनकतावच्छेदकं तत्तदर्थे व्याकरणव्युत्पाद्यत्वं साधुत्वमिति फलितम् । यद्वा व्याकरणव्यंग्यः शब्दनिष्ठः पुण्यजनकतावच्छेदको जातिविशेषः साधुत्वम् । भाष्ये तथैवाभिधानात् ।

वैयाकरणास्तु बोधकत्वमेव शक्तिः । तत्र[1] बोधकत्वमिन्द्रियादिवत् । अत एव विवरणेऽप्युक्तम्—बोधजननसामर्थ्यमेव शब्दस्यार्थेन सम्बन्ध इति । न तु अस्मात्पदादयमर्थो बोद्धव्य इत्याकारिका, इदं पदममुमर्थं बोधयत्वित्याकारिकावेश्वरेच्छा, ज्ञानं, कृति र्वा । विनिगमनाविरहेण सर्वेषां तत्त्वे गौरवात् । अतिरिक्तेत्यपि च न । अतिरिक्तपदार्थस्याश्रयभेदेन विषयभेदेन च भिन्नत्वेनानन्तपदार्थकल्पनायां गौरवस्य स्पष्टत्वात् ।

नचैवं गङ्गापदस्य तीरबोधकत्वेन तीरेऽपि शक्त्यापत्तिः । तथा च लक्षणोच्छेदापत्तेरिति चेदिष्टापत्तेः । यथा नैयायिकैर्लाघवात्सर्वानुभवसिद्धापि व्यञ्जना लक्षणयैव निर्वाहेऽतिरि-

१ तत्र बोधजनकत्वमिति ख० पु० पाठः ।

क्ता न स्वीक्रियते । तथाऽस्माभिरपि तत्तच्छाब्दबुद्धित्वाव-च्छिन्नं प्रति बोधजनकत्वज्ञानजन्योपस्थितित्वेनैव कारणतेत्येक एव कार्यकारणभाव इति लाघवाल्लक्षणा न स्वीक्रियते । लक्षणा पक्षे तु शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च कारणत्वे का-र्यकारणभावद्वयम्, तथा पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञान-त्वेन लक्षणाज्ञानत्वेन च हेतुता वाच्येति गौरवम् ।

अथ वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुता, वृत्तित्व-ज्ञानत्वेन च पदार्थोपस्थितिकारणतेति नानेकतत्कल्पनागौरव-मिति चेत् वृत्तित्वं शक्तिलक्षणान्यतरत्वम् । शाब्दबोधहेतुपदा-र्थोपस्थित्यनुकूलपदार्थसम्बन्धत्वं वा न कारणतावच्छेदकम् । शक्तित्वमपेक्ष्य गौरवात् । यदि तु अप्रसिद्धशक्यसम्बन्धित्वेन गृहीतार्थविषयबोधजनकत्वं लक्षणात्वेन व्यवह्रियते, प्रसिद्धार्थ-विषयं तच्छक्तित्वे नेति शक्तिलक्षणयोर्भेदं ब्रूषे, तर्हि लक्षणात-स्तात्पर्यानुपपत्तिज्ञानाभावरूपस्य भेदस्य व्यञ्जनायां सत्त्वेन तत्स्वीकार आवश्यकः । तत्सिद्धम्, शब्दनिष्ठतत्तदर्थविषयक-धीजनकत्वमेव शक्तिः ।

ननु शाब्दसामान्ये शक्तिज्ञानस्य हेतुत्वात्तज्ज्ञानं कथ-मिति चेत्,

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ॥
वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदैश्च वृद्धाः ॥

इति प्राचीनगाथोक्तव्याकरणादित इति गृहाण । तत्र मु-ख्यो व्यवहारत एव शक्तिग्रहः । व्यवहारस्तु सर्गादावीश्वर एव प्रयोज्यप्रयोजकवृद्धः सन् व्यवहरति, तेन च तटस्थो बालः आ-वापोद्वापाभ्यां घटमानय पटं नयेत्येवंरूपाभ्यां घटादिपदे शक्तिं गृह्णाति । आवापः संग्रहः । उद्वापस्त्यागः । प्रकृतिप्रत्ययादीनां

शक्तिग्रहो व्याकरणात्, गोसदृशो गवयपदवाच्य इत्युपमानात्, "अप्येकदन्तहेरम्बलम्बोदरगजाननाः" इत्यत्र गणेशत्वविशिष्टे शक्तिग्रहः कोशात्।

नन्वत्र "विरूपाणामपि समानार्थाना"मित्येकशेषापत्तिः। कोषे पदानामेव पदार्थतया समानार्थत्वाभावात्। कोकिलः पिकपदवाच्य इत्याप्तवाक्यात्पिकपदादौ कोकिले शक्तिग्रहः। "यवमयश्चरुर्भवती"त्यत्र यवशब्दो म्लेच्छप्रसिद्धिवशात् कंगोर्वाचकः। आर्यव्यवहारात् दीर्घशूकविशिष्टस्य वाचकः। व्यवहारस्योभयत्राविशेषादिति सन्देहे—

"वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
मोदमानाश्च दृश्यन्ते[1] यवाः कणिशशालिनः॥"

इति वाक्यशेषाद्दीर्घशूकविशिष्टे शक्तिनिर्णयः। पचति पाकं करोतीति विवरणात् सहकारतरौ मधुरं पिको रौतीत्यत्र सहकारतरुरूपप्रसिद्धपदसमभिव्याहारेण पिकपदस्य कोकिले शक्तिग्रहः।

ननु शाब्दबोधे शक्तिग्रहः[2] सहकारी, तथा च घटपदस्य घटे शक्तिग्रहात् पटप्रत्ययोऽपि स्यात्। ननु तदर्थविषयकशाब्दत्वावच्छिन्नं प्रति तच्छक्तपदज्ञानत्वेन हेतुत्वकल्पनान्नोक्तानुपपत्तिरिति चेत् तर्हि देशान्तरस्थस्य पुंसः काश्यां गौरस्तीति वाक्याद् गोप्रत्ययो न स्यात्। न हि तस्य काशीस्थायां गवि शक्तिग्रहोऽस्ति।

अत्र मीमांसकाः गवादिपदानां गोत्वे शक्तिः

"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे"

इति न्यायात। व्यक्तेस्तु जातिराश्रयं विनानुपपन्नेत्येवं-

---

१ तिष्ठन्तीति ख० पु०। २ शक्तिरिति ख० पु० पाठः।

रूपार्थापत्त्या लाभः ।

एतेन गामानयेत्यादौ गोत्वस्यानयनेऽन्वयानुपपत्त्या व्यक्तेराक्षेपसम्भवेऽपि गौरस्तीत्यत्र गोत्वस्य अस्तित्वेऽन्वयसम्भवेनानुपपत्तिज्ञानस्यैवासम्भावितत्तया न तेन व्यक्तेर्लाभ इति दीक्षितोक्तमपास्तम् ।

गोपदस्य गोत्वे शक्तिर्व्यक्तौ लक्षणेति मण्डनमिश्राः । तदुक्तम्—

जातावस्तित्वनास्तित्वे नहि कश्चिद्विवक्षति ।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे ॥ इति

अस्तित्वनास्तित्वे उत्पादविनाशौ । न च युगपद्वृत्तिद्वयविरोधः । गङ्गायां घोषमत्स्यौ स्त इत्यत्र तत्स्वीकारेण तदभ्युपगमे बाधकाभावात् । तन्न ।

शक्याद्न्येन रूपेण ज्ञाते भवति लक्षणा ।

यथा गङ्गायां घोष इत्यत्र तीरत्वेन ज्ञाते । नह्यत्र व्यक्तिर्गोत्वादतिरिक्तरूपेण ज्ञाता । व्यक्तित्वेन सास्नादिमत्त्वेन ज्ञाने च तेनैव शाब्दबोधापत्तिः । लक्ष्यतावच्छेदकरूपेणैव लक्ष्यस्य भानानियमात् ।

कुब्जशक्तिवादिनस्तु जातौ व्यक्तौ च शक्तिः । परन्तु जातिविषयकत्वेनैव ज्ञाता शक्तिर्व्यक्तिविषयकशाब्दबोधे कारणम् । व्यक्तिशक्तिस्तु स्वरूपसदुपयुज्यते ।

नचैवं व्यक्तिशक्तिस्वीकारवैयर्थ्यमिति वाच्यम् । तत्पदाशक्यस्य भाने घटादेरपि भानप्रसङ्गेन व्यक्तिशक्तिस्वीकारस्यावश्यकत्वात् । तथा च गोत्वप्रकारकगोविशेष्यकशाब्दबोधं प्रति गोत्वविषयकगोपदशक्तिज्ञानं[1] हेतुरित्याहुः । तन्न । गौरवात् ।

---

१ गोपदशक्तिमति गौरित्याकारकशक्तिज्ञानमिति ख०पाठः ।

नैयायिकास्तु जातौ व्यक्तौ वैशिष्ट्ये च शक्तिरिति सम्प्रदायमते तदुक्तं "जात्याकृतिव्यक्तयः पदार्थ इति"—एकशक्तिसूचनाय पदार्थ इत्येकवचनम् । सम्प्रदायमते जातौ शक्तिस्वीकारे गौरवम् । कथं तर्हि जातिबोध इति चेत् यथैकस्य प्रवाहसम्बन्धस्य तीरत्वतीरयोरभावात् शक्यसम्बन्धरूपाया लक्षणाया एकस्या लक्ष्यतावच्छेदकलक्षणयोरसम्भावितया लक्ष्यतावच्छेदकविशिष्टे लक्षणाया अनङ्गीकारेण गङ्गायां घोष इत्यादौ स्ववृत्त्यानुपस्थितस्यापि तीरत्व[1]स्य शाब्दबोधे भानम् । तथा शक्यतावच्छेदके शक्त्यभावे तादृशकार्यकारणभावाद्[2] गोत्वभानं न भविष्यति ।

नव्यमते तु गव्येव शक्तिर्न तु गोत्वेऽपि । गौरवात् । न चैवं गोत्वप्रत्ययानापत्तिः । गोत्वविशिष्टशाब्दबोधं प्रति गोत्वधर्मितावच्छेदकशक्तिग्रहस्य हेतुत्वात् ।

प्राभाकरास्तु कार्यान्विते पदानां शक्तिरित्याहुः ।

यत्तु दीक्षिताः, पदं तावच्चतुर्विधम् । रूढम्, यौगिकम्, यौगिकरूढम् । योगरूढञ्च । यत्रावयवशक्तिनिरपेक्षेण समुदायशक्तिमात्रेण बोधः, तद्रूढम् । यथा गोपदम् । यत्रावयवार्थ एव बुध्यते तद्यौगिकम् । यथा पाचकादिपदम् । यत्र यौगिकरूढार्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढम् । यथोद्भिदादिपदम् । यौगिकं खनित्रे, रूढं यागे । योगरूढम् पङ्कजादिपदमित्याहुः ।

अत्रेदं वक्तव्यम् । पद्यतेऽर्थोऽनेनेति व्युत्पत्त्यार्थबोधकं प्रकृतिप्रत्ययादिपदशब्देन विवक्षितम्, उत सुप्तिङन्तमिति । नाद्यः । तत्रा[3]वयवार्थाभावेन यत्रावयवशक्तिनिरपेक्षेणेति स्व-

१ भावबलादिति ख० पु० पाठः ।
२ क० पु० श्रुत्या । ३ यत्रेति ख० पु० पाठः ।

ग्रन्थविरोधात् । नान्त्यः । कृदादौ प्रकृतिप्रत्ययसमुदाये शक्त्य-स्वीकारात् पदस्फोटापत्तेः । तथा च बृहत्सिद्धान्तहानिः ।

यदपि रूढं गोपदमित्युक्तम् । तन्न । तत्रापि गच्छतीति गौ-रितिव्युत्पत्तिसम्भवेन केवलरूढत्वाभावात् । गमनकर्तृत्वविशिष्टे गोत्वे शक्तिरिति वक्तुं शक्यत्वात् । भवद्भिरपि धेनुपदे योगरूढि-त्वस्वीकारात् । धेनुपदेऽवयवार्थः प्रतीयते, इह तु नेति, अत्र विनिगमकाभावात् । तस्मान्मणिनूपुरादिरुदाहर्तव्यम् ।

एवं पाचकादिकं केवलयौगिकोदाहरणमपि न । भवद्रीत्या पच इति अक इति शक्तं पदम् । न च तत्रावयवार्थबोधः सम्भ-वति । न च भवद्रीत्या सुबन्तं पदमेव मया ग्राह्यम् । तस्यापि सुविशिष्टे शक्त्यभावेन दोषतादवस्थ्यात् । शक्तं पदं चतुर्धेति चिन्तामण्यादावुक्तत्वात् ।

नन्वश्वगन्धपदे औषधिविशेषरूपार्थबोधनिरूपिता रूढिः । अश्वसम्बन्धवत्तया वाजिशालाबोधे तु योगमात्रम् । एवं म-ण्डपपदेऽपि मण्डपानकर्तृबोधे योगमात्रम् । गृहविशेषबोधे रूढि-त्वादिसिद्धान्तः कथं सङ्गच्छते । रूढिजन्योपस्थितिर्योगार्थान्वय-प्रतिबन्धिकेत्येतदर्थकरूढिर्योगमपहरतीति न्यायविरोधादिति चेत्, यत्रोभयत्रापि प्रकरणं तदभावो वा तत्रैव न्यायस्य प्रवृत्तेः ।

यत्तु यत्रोभयोरन्वययोग्यता, मण्डपं पश्येत्यादौ, तत्रापि रूढेर्योगापहारितेत्यूचुर्वैयाकरणनव्याः । तन्न । तत्र योगार्थे एव प्रकरणसत्त्वेन योगार्थस्यैव प्राबल्यात् ।

ननु पङ्कजपदान्नियमतः पद्मस्योपस्थित्या समुदायरूढि-स्वीकारेऽपि उद्भित्पदेन खनित्रमिव पङ्कजपदात्कुमुदमपि बुध्ये-त, योगसत्त्वादिति चेन्न । सम्प्रदायमते यत्र योगरूढिभ्यामेकार्थ-बोधस्तत्र केवलयौगिकार्थबोधरूढेः प्रतिबन्धकत्वात् ।

मणिकृतस्तु रूढ्या नियमतः स्मृतं पद्ममेव कर्तृवाचक-डप्रत्ययेन पङ्कजकर्तृतयाऽनुभाव्यते। बाधकं विना व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात्। व्यक्तिवचनानां यत्किञ्चिद्व्यक्तितात्पर्यकाणां सन्निहित उपस्थितः प्रथममित्यर्थः[1]। तथा च पद्मे तात्पर्यसत्त्वेन पङ्कजनिकर्तृतया तदेव योगेनापि प्रतीयते, न कुमुदमिति, रूढेर्न प्रतिबन्धकत्वम्। ग्राह्याभावानवगाहित्वाज्जनकज्ञानाविरोधित्वाच्चेत्याहुः। तन्न। कुमुदं पङ्कजमित्यत्र पद्मे तात्पर्याभावनिश्चयस्यैव तत्र बाधकत्वेन प्रथमोपस्थित्या च बाधकं विनेतरस्याप्रवृत्त्या लक्षणां विनैव कुमुदबोधापत्तेः। नचेष्टापत्तिः। गृहीतपद्मप्रयोगस्य पद्मान्वयानुपपत्तिपुरःसरैव कुमुदधीरिति स्वसिद्धान्तो व्याहन्येत।

न च पङ्कजमित्यत्र डप्रत्ययस्य पद्मत्वविशिष्टे लक्षणैवास्ताम्। युगपद्वृत्तिद्वयस्य गङ्गायां मीनघोषावित्यत्रेव सम्भवात्, किं समुदायशक्त्येति वाच्यम्। डप्रत्ययस्याप्रकृतितया[2] तदर्थपद्मत्वविशिष्टे पङ्कजोत्तरविभक्त्यर्थस्यानन्वयापत्तेः। प्रत्ययानां हि प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। एकाक्षरकोशावधृतशक्तिककखादिवर्णानामपि लक्षणयैवोपपत्तौ च कखादिशब्दानामपि समुदायशक्त्यभावापत्तेश्च।

अन्ये तु पङ्कजपदे योग एव। पद्मत्वविशिष्टस्मृतिस्तु संस्कारात्। तदुद्बोधकश्च पङ्कजपदमेव। प्रत्ययानां प्रकृतिप्रयोज्योपस्थितिविषयान्वयित्वं, तेन विभक्त्यर्थकर्मत्वादेः पद्मत्वविशिष्टेऽन्वयः। धूमोऽस्तीत्यादौ सति तात्पर्ये धूमोपस्थाप्यवह्नौ भवत्येवैकत्वान्वयः। संस्कारान्नियतोपस्थितिकपद्मत्वविशिष्टमेवादाय

१ उपस्थितमित्यर्थ इति क० पु० पाठः।
२ डप्रकृतिं स यस्या प्रकृतितयेति ख० पु० पाठः।

योगार्थबोधस्य व्युत्पन्नत्वात् न कुमुदसाधारणो बोध इत्याहुः।

एवं पङ्कजपदात् उत्पलपद्मबोधो लक्षणयैव। तद्विजातीयमेवेति पद्माकृतिसदृशाकृतौ स्थलपद्मत्वाविशिष्टे[1] वा लक्षणा।

ननु—

"शक्याद्न्येन रूपेण ज्ञाते भवति लक्षणे"ति

न्यायात्समुदायस्य पद्मत्वेन[2] लक्षणा न युक्तेति चेत् कर्तृवाचकडप्रत्यये सा बोध्या।

नानार्थस्थले तु इयं शक्तिः संयोगादिभिर्नियम्यते। यथा सशङ्खचक्रो हरिरित्यादौ शङ्खचक्रसंयोगात् हरिशब्दस्य विष्णौ। तत्र नियमनं नाम उपस्थितयोर्द्वयोरेकतरमात्रार्थविषयकतातात्पर्यनिर्णयद्वारा तन्मात्रविषयकशाब्दबोधजननम्। नानार्थशब्दजशाब्दबोधे तात्पर्यनिर्णयस्य हेतुत्वात्।

इति शक्तिनिरूपणम्।

लक्षणा तु शक्यादशक्योपस्थितिरित्येके। गङ्गापदेन शक्त्या प्रवाहोपस्थितौ तत्र चान्वयानुपपत्तिप्रतिसन्धानानन्तरं गङ्गापदात्पुनः स्मृतेन प्रवाहेणैकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकतया स्वसम्बन्धि तीरमुपस्थाप्यते। तथा च सैवोपस्थितिर्लक्षणेति भावः। तन्न। वृत्तेरुपस्थितिहेतुत्वेनोपस्थितिरूपत्वा[3]भावात्।

अशक्ये तात्पर्यं लक्षणेत्यन्ये। गङ्गापदाशक्ये तीरे तात्पर्यम्, गङ्गापदात्तीरबोधो जायतामितीच्छाविषयत्वम्। तन्न। घटमानयेत्यादौ घटकर्मत्वयोराधेयत्वरूपसंसर्गे तात्पर्यसत्त्वा-

1 स्थलपद्मेति ख० पु० पाठः।
2 पद्मत्वाविशिष्टे इति ख० पु० पाठः।
3 उपस्थितिहेतुत्वाभावादिति ख० पु० पाठः।

लक्षणात्वं स्यात् । नचेष्टापत्तिः । अन्वयेन शक्तिर्न वा लक्षणेति सिद्धान्तव्याघातात् ।

तस्मात्स्वशक्यसम्बन्धो लक्षणा । स्वं लाक्षणिकं पदं तस्य यच्छक्यं तत्सम्बन्धो लक्षणेत्यर्थः ।

सा द्विधा । गौणी, शुद्धा च । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्वं सादृश्यम् । तदात्मकः शक्यसम्बन्धो गौणी ।

ते च प्रत्येकं जहत्स्वार्थाऽजहत्स्वार्थेति भेदाद्द्विविधे । तत्र जहत्स्वार्थत्वं शक्यार्थस्य केनापि रूपेण लक्ष्यार्थान्वयिनान्वयित्वम् । शक्यार्थस्य तदन्वयित्वमजहत्स्वार्थत्वम् । यथा गौर्वाहीकः । अत्र वाहीके गवभेदस्य बाधाद् गोपदेन गोसदृशो लक्ष्यते । गोसादृश्यश्च गोगतजाड्यमान्द्यादिकमेव । तथा च जडो मन्दश्च वाहीक इति शाब्दबोधः । गौणी अजहत्स्वार्था तु नास्त्येव । सादृश्यसम्बन्धेन लक्षणायां मुख्यार्थस्य लक्ष्यार्थान्वयिनानन्वयात् । गोवाहीकोभयपरे गाव एते समानीयन्तामित्यादौ गोवाहीकसमुदायः छत्रिन्यायेन लक्ष्यते । न तु गोसदृशत्वं स्वास्मिन् । भेदघटितस्वसादृश्याभावादिति प्राञ्चः ।

नव्यास्तु यत्किञ्चित् गोसदृशत्वेन गोवाहीकसमुदायप्रतिपिपादयिषया गाव एते यान्तीति प्रयुक्तं, तदा गौण्यपि अजहत्स्वार्था दुर्वारेत्याहुः ।

शुद्धा जहत्स्वार्था गङ्गायां घोष इत्यादौ । शुद्धान्त्या यथा—काकेभ्यो दधि रक्ष्यताम् , छत्रिणो यान्तीत्यादौ दध्युपघातकत्वेन काककुक्कुटादीनामेकसार्थवाहित्वेन छत्रच्छत्रिणां बोधात् ।

नैयायिकास्तु इन्नन्तस्य वाक्यत्वेनाशक्यत्वाच्छत्रपदे एव एकसार्थे लक्षणा । मतुवर्थश्च सम्बन्धः । तथा च एकसार्थवन्तो यान्तीति वाक्यार्थबोधः । अथवा प्रकृतावेवैकसार्थवति लक्षणा,

प्रत्ययश्च तात्पर्यग्राहकः । यद्वा—प्रत्ययस्यैवैकस्वार्थवति लक्षणा । छत्रपदं च तात्पर्यग्राहकमित्याहुः ।

एवं लक्षितलक्षणाप्येको भेदः । द्विरेफः कदम्बः इत्युदाहरणम् । तत्र द्वौ रेफौ यत्रेति बहुव्रीहित्वाद्रेफद्वयसम्बन्धिन्यर्थे शक्तम् । यद्यपि योगमात्रं क्रूरादिपदेऽप्यस्ति । तथापि रूढ्या भ्रमरपदमेव बोधयति । तेन च स्वशक्यसम्बन्धी भ्रमररूपोऽर्थो लक्ष्यत इति द्विरेफपदस्य भ्रमरे लक्षणा ।

न च द्विरेफपदलक्ष्यभ्रमरपदस्य शक्त्यैव निर्वाहेऽलं भ्रमरे लक्षणयेति वाच्यम् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन भ्रमरस्य द्विरेफपदार्थत्वाभावेन तत्र विभक्त्यर्थानन्वयापत्तेः ।

न च "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणे" ति भ्रमरपदशक्यतावच्छेदकभ्रमरत्वस्य कथं लक्ष्यतावच्छेदकत्वं, शक्त्यैव तद्बोधसम्भवादिति वाच्यम् । शक्येन रूपेण लक्षणानङ्गीकारे शक्त्या च तद्बोधसम्भवे लक्षणाकल्पनमफलमित्यस्यैव बीजतया, प्रकृते च शक्त्या भ्रमरत्वविशिष्टस्य बोधस्वीकारे भ्रमरस्य द्विरेफपदार्थत्वाभावेन विभक्त्यर्थान्वयानुपपत्त्या शक्यस्यापि लक्षणयैव भानमुपेयते । तथा च लक्षितपदस्य लक्षणा लक्षितलक्षणा । सा च द्विरेफपदस्य वृत्तिरिति । इयमातिरिक्तेति प्राञ्चः । तत्र शक्यसम्बन्धो हि लक्षणा, न तु शक्यस्य साक्षात्सम्बन्धः । गौरवात् । तथा च द्विरेफपदस्य लक्षणयैवोपपत्तेर्नातिरिक्तवृत्तिरिति दिक् ।

वस्तुतस्तु द्विरेफपदस्य भ्रमरे शक्तिरेव । सामाविशेषे रथन्तरादिपदानामिव । तत्रावयवार्थाभावात् । अत एव भ्रमरपर्या-

---

१ अयं पाठः क० पु० नास्ति ।

येषु द्विरेफशब्दस्य कोशेषु पाठः। न हि लाक्षणिकानां पर्यायेषु क्वचित्पाठः कोशेषु दृश्यते। बाधप्रतिसन्धानं विनैव द्विरेफपदात् भ्रमरोपस्थितेश्च, शक्तिरेवोचिता, न लक्षणा। नन्वेवं लक्षितलक्षणोच्छेदापत्तिरिति चेन्न। "हिरण्यपूर्वं कशिपुं प्रचक्षत" इत्यादौ लक्षितलक्षणां विना न निर्वाहात्।

वेदान्तिनस्तु तत्त्वमसीत्यादौ परोक्षचैतन्यापरोक्षचैतन्यवाचकयोस्तत्त्वमोः सामानाधिकरण्यान्वयानुपपत्त्या चैतन्यमात्रे लक्षणा। तथा च जहदजहल्लक्षणाख्योऽपि भेद इत्याहुः। तन्न। जहत्स्वार्थापदेनैव सङ्ग्रहात्। नचाजहत्स्वार्थत्वसम्भवेन विनिगमनाविरह इति वाच्यम्। नञः प्रतियोगितावच्छेदकावच्छिन्नाभावबोधकत्वेन तदसम्भवात्। पदानां स्वपरत्वे तु लक्षणैव, न शक्तिः, अन्यलभ्यत्वादित्याहुः। तन्न।

"ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते॥"

इति रीत्या शक्तिरेव न्याय्या। अनन्यलभ्यो हि शब्दार्थ इत्यत्रार्थशब्दो वृत्तिपरः। तथा च संसर्गादिना लभ्ये वृत्तिकल्पनमन्याय्यमिति तदर्थः। तथा चान्यलभ्यत्वादिति हेतूपन्यासो मुधैवेति दिक्।

इति लक्षणानिरूपणम्।

व्यञ्जनायाः शक्तिलक्षणामूलत्वात्तन्निरूपणानन्तरं प्राप्तावसरतया सा निरूप्यते।

तल्लक्षणन्तु "शक्तिलक्षणाद्यजन्यप्रतीतिजनकः शब्दनिष्ठो व्यापारो व्यञ्जना" इति।

अत्र नैयायिकाः। व्यञ्जना न वृत्यन्तरम्। लक्षणयैव तदर्थसिद्धेः। ननु लक्षणायां मुख्यार्थे इतरान्वयानुपपत्तिर्बीजम्।

न च गच्छ गच्छसीत्यादौ सास्तीति चेत् , किमिदं लक्षणाबीजम् । लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेन्न । यष्टीः प्रवेशयेत्यत्र यष्टिपदस्य यष्टिधरे लक्षणा । न च तत्र मुख्यार्थे यष्टौ प्रवेशनान्वयानुपपत्तिरिति व्यभिचारात् । अपि तु तात्पर्यानुपपत्तिरिति चेत् , तर्हि गच्छ गच्छसीत्यत्रापि कान्तगमनाभाव एव तात्पर्यविषयः । तदन्वयानुपपत्त्या गमनबोधकपदस्य गमनाभावो लक्षणयैवोपपत्तौ नातिरिक्तवृत्त्यन्तरकल्पनम् । गौरवात् ।

नचैवं लक्षणामूलव्यञ्जनाया निरासेऽपि अभिधामूलावश्यं वाच्या । तथा हि—नानार्थसैन्धवमानयेत्यादौ भोजनप्रकरणं लवणस्येवाश्वादेरपि प्रतीत्यापत्त्या शक्त्या नानार्थविषयकशाब्दबोधे जननीये प्रकरणादि सहकारि अवश्यं वाच्यम् । तथा च प्रकरणशून्याश्वादिरूपार्थान्तरप्रतीतौ नाभिधा, सहकार्यभावान्नापि लक्षणा; मुख्यार्थबाधाभावात् । किन्तु व्यञ्जनेति सावश्यं वाच्येति वाच्यम् । नानार्थस्थलेऽर्थान्तरप्रतीतिः शक्त्यैव । शक्ततावच्छेदकैकत्वेऽपि शक्यतावच्छेदकनानात्वम् ।

न च नानार्थविषयकशाब्दत्वावच्छिन्नं प्रति प्रकरणादीनां कारणत्वात् तदभावे कथमर्थान्तरप्रतीतिः शक्येति वाच्यम् । प्रकरणादीनामननुगमेन व्यभिचारान्न कारणता । किन्तु तात्पर्यग्रहस्यैव । स च इहाप्यस्तीति शक्त्यैव निर्वाहः । परन्तु यत्रार्थे प्रकरणं तत्र प्रथमत एव तात्पर्यग्रहादादावेव तदर्थप्रतीतिरपदार्थेति तात्पर्यग्राहकान्तरात्तात्पर्यग्रहे सति अपरपदार्थप्रतीतिरित्यलमभिधामूलव्यञ्जनास्वीकारेण ।

ननु लक्षणा पदनिष्ठा । व्यञ्जना तु पदैकदेशाश्रितेत्यादा-

य भेदाभेद इति चेन्न । तदेकदेशादयो हि अर्थविशेषे तात्पर्य-ग्राहकाः । न तु तत्प्रतिपादकाः । ननु लक्षणाजन्यशाब्दबोधे तात्पर्यग्रहः कारणं, न तु व्यङ्ग्ये इति चेन्न । व्यङ्ग्ये तात्पर्य-स्यानपेक्षायां गङ्गायां घोष इत्यादौ शैत्यादिकमेव प्रतीयते, न केशवालुकादिमत्त्वमिति नियमो न स्यात् ।

ननु सहृदयानां वासनाविशेषपरिपाकात् शैत्यपावना-दिकमेव प्रतीयते, न केशवालुकादिकमिति चेत्, तर्हि लक्ष-णास्थलेऽपि सा नियामिकास्तु । मास्तु तात्पर्यग्रहस्य कार-णता । वस्तुतस्तु गच्छ गच्छसीत्यादौ अस्यास्तात्पर्यमनुमीयते । यत्र तु नानुमितिसामग्री तत्रोत्कटकोटिसंशयरूपसम्भावना वि-षयीक्रियते । तथा च मा गा इत्यर्थे गमनाभावप्रतीतीच्छयोच्च-रितत्वरूपतात्पर्यमात्रमुन्नीयते, सम्भाव्यते वा । न तु शब्दात्त-न्निर्णयः । येन वृत्त्यन्तरं स्वीकरणीयमित्याहुः ।

अत्रेदं वक्तव्यम् । किं व्यञ्जनैव नास्तीति ब्रूषे, उत त-स्याः पदवृत्तित्वं नास्तीति । नाद्यः । "अनया कटाक्षेणाभिला-षो व्यञ्जित" इति सर्वजनप्रसिद्धेस्तथैवानुभवाच्च चेष्टावृत्तिव्यञ्ज-नाया अपलपितुमशक्यत्वात् । नान्त्यः । गतोऽस्तमर्क इत्यादिवा-क्याद् गुरुं प्रति सन्ध्यावन्दनतात्पर्येण प्रयुक्तात् प्रतिवेश्यादीनाम-भिसरणोपक्रमादिबोधस्य वक्तृतात्पर्याभावेन लक्षणयोपपाद-यितुमशक्यत्वात् । किञ्च देवताप्रसादादिना रचितकाव्ये रचितुः तदर्थज्ञानाभावेन तदर्थे तात्पर्याभावेन तात्पर्यग्रहासम्भवेऽपि व्यङ्ग्यस्य चमत्कारिबोधविषयताया यावत् बहुशो दृष्टत्वाच्च ।

यदप्युक्तम्, व्यङ्ग्ये तात्पर्यस्यानपेक्षायां गङ्गायां घोष इत्या-दौ शैत्यादिकमेव प्रतीयते । न तु केशवालुकादिमत्त्वमिति नि-यमो न स्यादिति । तदत्यन्तरभसात् । "स्वायत्ते शब्दप्रयोगे

किमित्यवाचकं प्रयुज्महे" इति न्यायेन तटे घोष इति विहाय गङ्गायां घोष इति लक्षणामुखप्रयोगे बीजाकांक्षायां शैत्यपावनत्वादिप्रतीतेरेव बीजत्वम् । न केशवालुकादिमत्त्वप्रतीतेस्तस्यास्तटे घोष इति मुख्यप्रयोगादपि सम्भवात् । केशवालुकादिकं तटनिष्ठं, न गङ्गापदशक्यप्रवाहादिनिष्ठम् । यद्गु गङ्गापदलक्षणया घोषे प्रतीयेत । यदप्युक्तं वस्तुतस्त्वित्यादिना व्यङ्ग्यार्थोऽनुमेयः संशयविषयो वेति । तन्न । व्याप्त्यादिज्ञानाभावेऽपि तदर्थप्रतीतेः संशयस्याप्रतीतेश्च । किञ्च—

रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम् ।
रसाकुला च्छादयते दक्षिणं नयनं हरेः ॥

इत्यादौ हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वम्, तन्निमीलनेन सूर्यास्तमयः, तेन पद्मसङ्कोचः, तेन पितामहस्य स्थगनम्, तेनाप्रतिबद्धरतिविलसितमिति क्रमेण व्यङ्ग्यार्थप्रतीतेर्व्यञ्जनावश्यं स्वीकार्या । नह्यत्र लक्षणा सम्भवति । सर्वत्रैकस्य शक्यसम्बन्धस्याभावात् । सम्बन्धभेदेऽपि तत्स्वीकारे लक्ष्यतावच्छेदकेन लक्षणासम्बन्धभेदादिति भवत्सिद्धान्तो व्याहन्येत । किञ्चानयार्थबोधे जननीये वक्तृबोद्धव्यवाच्यादिवैशिष्ट्यज्ञानं प्रतिभा च सहकारि । प्रतिभा च नवनवोन्मेषशालिनी-बुद्धिः । तदुक्तम् ।

"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मतेति"

नवनवोन्मेषो जन्मान्तरीयजनकत्वज्ञानजन्यसंस्कारोद्बोधः ।

ननु लक्षणायामपि वक्त्रादिवैशिष्ट्यज्ञानादेः सहकारित्वमस्त्विति चेन्न । तदभावेऽपि तात्पर्यग्रहे सति तदर्थप्रतीतेः । यथा गङ्गायां घोष इत्यादौ सर्वान्प्रति एकरूपेणैव बोधः । न तथा गतोऽस्तमर्क इत्यादौ । तस्या अतिरिक्तत्वे प्रामाणिकव्यवहा-

रोऽपि नियामकः। तथा हि—निपातानां द्योतकत्वमाकरे उक्तम्। द्योतकत्वञ्च समभिव्याहृतपदशक्तिव्यञ्जकत्वम्। इदं पदमेतस्य न वाचकं नापि लक्षकम्, अपि तु व्यञ्जनया बोधकमित्यादिप्रामाणिकव्यवहारश्च। एवं व्यञ्जनाया आवश्यकत्वेऽपि यदि दुराग्रहात्त्यज्यते, तर्हि बोधकत्वं शक्तिरित्याश्रित्य लक्षणापि त्यज्यताम्। न हि लक्षणास्वीकारो व्यञ्जनात्यागश्च युक्तिसह इत्यास्तां तावत्।

ननु बोधकत्वं चेच्छक्तिस्तर्हि चेष्टाया अपि बोधकत्वाच्छक्तित्वापत्तिरिति चेन्न। चेष्टा शक्तेति प्रामाणिकव्यवहाराभावात्। किन्तु तज्जन्यबोधे तज्जन्यस्य[1] कारणत्वमात्रम्। तद्वाचकशब्द[2]स्मरणद्वारा चेष्टया बोध इत्यपि कश्चित्। तन्न[3]। चेष्टया जडमूकादिव्यवहारानापत्तेः। तस्यापि जन्मान्तरीयशब्दस्मरणमित्यपि कश्चित्।

## इति व्यञ्जनानिरूपणम्।

अथ सकलशब्दमूलभूतत्वाद्धात्वर्थो निरूप्यते।

तत्र गुरुमतानुयायिनः। यत्नातिरिक्तः फलानुकूलो व्यापारो धात्वर्थः। यत्न आख्यातार्थः। धात्वर्थे कारकान्वयः।

मण्डनमिश्रमतानुयायिनस्तु फलमेव धात्वर्थः। व्यापारः प्रत्ययार्थः। प्रत्ययार्थव्यापारव्यधिकरणधात्वर्थाश्रयत्वमेव कर्मत्वम्। घटं भावयतीत्यत्र णिच्प्रत्ययार्थव्यापारव्यधिकरणोत्पत्त्याश्रयत्वेन घटादेः कर्मत्वम्। अन्तर्भावितण्यर्थेऽपि प्रत्ययस्यैव णिजर्थे लक्षणेति न दोषः। प्रत्ययार्थव्यापाराश्रयत्वमेव कर्तृ

---

१ तज्ज्ञानस्येति ख० पु० पाठः।

२ तद्बोधक इति ख० पु० पाठः।

३ अयं पाठः ख०पु० नास्ति।

त्वम् । एवञ्च कालस्य स्ववाचकाख्यातव्यापारान्वितत्वमपि लभ्यत इत्यपरमनुकूलमित्याहुः । तन्न । गुरुः शिष्याभ्यां पाचयतीत्याद्यनापत्तेः । तत्र हि प्रयोजकव्यापारो णिजर्थः । प्रयोज्यव्यापार आख्यातार्थः । एवञ्च संख्यायाः स्ववाचकाख्यातार्थव्यापारान्वयिन्येवान्वयाच्छिष्याभ्यामिति द्विवचनतृतीयानापत्तिः । गुरुरित्यत्र तृतीयापत्तिश्च ।

अन्ये तु धातोः केवलव्यापारे शक्तिः, फलं कर्म प्रत्ययार्थः, लाघवादित्याहुस्तन्न । कर्मणि द्वितीया चतुर्थ्यादिविधानेनानेकसुपां तिङां च फले शक्तिकल्पनापेक्षया फलविशेषबोधे तत्तद्धातुसमभिव्याहारस्य कारणत्वापेक्षया धातोरेव फले शक्तिकल्पनाया उचितत्वात् । तण्डुलः पच्यते स्वयमेवेत्यादिकर्मकर्तृप्रयोगानुरोधेन फलस्यापि धातुवाच्यत्वावश्यकत्वाच्च ।

वैयाकरणास्तु फलानुकूलो व्यापारो धात्वर्थः । तत्र फले व्यापारे च पृथक् शक्तिः । फलांश उत्सर्गतः व्यापारे विशेषणं । जन्यत्वं संसर्गः । क्वचित्तु विषयत्वं संसर्गः । धातुना च साध्या क्रियाऽभिधीयते । घञादिभिश्च सिद्धावस्थापन्ना । तत्र क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकत्वरूपं साध्यत्वम् । क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकरूपं सिद्धत्वम् । ननु कृष्णं नमेच्चेत्सुखं यायादित्यादावनन्वयापत्तिः । नमनक्रियाया आकाङ्क्षाविरहादिति चेन्न । शब्दसमभिव्याहारप्रयुक्ताकाङ्क्षोत्थापनात् । पचतिभवतीत्यादौ पचतीत्यस्याकाङ्क्षाभावेऽपि भवतीत्यादेः कर्त्राद्यपेक्षत्वाद्योग्यतावशादन्यतराकाङ्क्षयैवान्वयेनादोषात् । नन्वेवमस्तिभवतिविद्यतीनां धातुत्वानापत्तिः । तेषां सत्तामात्रार्थत्वेन व्यापाररूपक्रियावाचकत्वाभावादिति

चेन्न । तत्रापि सत्ताविषयव्यापारस्यैवार्थत्वात् ।

नचैवं किं करोतीति प्रश्ने पचतीत्यस्येवास्तीत्यस्याप्युत्तरत्वं स्यात् । आसन्नविनाशं किञ्चिदुद्दिश्य किं करोतीति प्रश्नेऽस्तीत्युत्तरस्य सर्वसम्मतत्वात् । कृञस्तूत्पत्त्यधिकरणस्तदनुकूलो व्यापारोऽर्थः ।

नैयायिकास्तु कृञो यत्नमात्रमर्थः । नन्वेवमकर्मकतापत्तिरिति चेन्न । यद्धातूच्चारणे कर्माकाङ्क्षा नियता स सकर्मकः । सा च समानार्थकेष्वपि धातुत्वविशेषोपस्थापननिबन्धना । एवञ्च कृञ्यतोर्यत्नार्थत्वाविशेषेऽपि कृञ एव सकर्मकत्वं न यतेः । यथा कर्मत्वादिपदोपस्थाप्यस्य क्रियाकाङ्क्षाभावेऽपि द्वितीयोपस्थाप्यस्य तत्साकाङ्क्षत्वमित्याहुः । तन्न । गच्छत्यादीनां यतेरिव कुत्रेत्याकाङ्क्षासत्त्वेन कर्माकाङ्क्षाविरहेणाकर्मकतापत्तेः । किञ्च कृञो यत्नमात्रार्थकत्वे दृशेरिव कर्मस्थभावकत्वाभावात्पश्यति भव इत्यत्रेव क्रियते घटः स्वयमेवेत्यत्रापि यगादिकं न स्यात् । ननु किं तर्हि धातोः सकर्मकत्वाकर्मकत्वे । स्वव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम् । तत्समानाधिकरणफलवाचकत्वमकर्मकत्वमिति केचित् ।

वस्तुतस्तु एतच्छास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम् । अत एव मास आस्यते इत्यादौ कर्मणि लकारः । न केवलव्यापारवाचकत्वमकर्मकत्वम् । फलव्यापारोभयवाचकत्वं सकर्मकत्वमिति । एतेन नैयायिकोक्तमपास्तम् ।

किञ्च केवलव्यापारवाचकस्यैवाकर्मकत्वे ऊर्ध्वदेशसंयोगरूपव्यापारस्योत्पूर्वकस्थाधातोरर्थस्य विद्यमानत्वे उत्थित इति भूतक्रान्तप्रयोगानुपपत्तिः ।

वैयाकरणमते तु ऊर्ध्वदेशसंयोगानुकूलव्यापारस्यातीत-

त्वादूर्ध्वदेशसंयोगसत्त्वेऽपि तथा प्रयोगोपपत्तिः । केचित्त्व-
कर्मकत्वं व्यापारव्यधिकरणफलवाचकत्वाभाव एव । स चा-
स्त्यादौ फलांशाभावादुत्तिष्ठतीत्यादौ सामानाधिकरण्यादित्याहुः ।
तन्न । गौरवात् । यतेरपि गम्यादिवत्सकर्मकत्वम् । नचैवं वृक्षा
द् भूमिं पर्णं पततीति स्यादिति चेदिष्टापत्तेः ! अत एव द्वितीया-
श्रितेति सूत्रे नरकपतित इत्युदाहृतम् । अनुभूयते सुखं, सा-
क्षात् क्रियते गुरुरित्यादौ निपातानां द्योतकत्वेनानुभवसाक्षा-
त्काररूपफलयोर्धात्वर्थत्वात्कर्मणि लकारः[१] ।

यत्तु उपसर्गाणां द्योतकत्वे व्यतिसे इत्यादौ कथं व्यत्य-
यप्रत्यय इति चेत् , लुप्तधातुस्मरणात् । धातुलोपमजानतस्तु
बोधो न भवेदित्यूचुर्नैयायिकनव्याः । तन्न। राजपुरुष इत्यादौ
प्रत्ययलोपमजानतोऽपि लक्षणया तदर्थबोधवत्ताऽत्रापि धातुलोप-
मजानतोऽपि प्रत्ययमात्रस्य लक्षणयैव बोधोपपत्तेः । न हि प्रत्य-
यलोपे प्रकृतेस्तदर्थे लक्षणा प्रकृतिलोपे प्रत्ययस्य नेति युक्तिमत् ।

ननु निपातानां द्योतकत्वे मातेव हितकारिणीमित्यत्र प्रथ-
मानुपपत्तिः । मातृशब्दस्य तत्सदृशलाक्षणिकतया द्वितीयान्तेन
सामानाधिकरण्यात् द्वितीयापत्तेरिति चेत्सत्यम् । असाधुरेवायम् ।
यदि समर्थनीय इत्याग्रहस्तर्हि पदसंस्कारपक्षे शक्यम् । क्षुदित्यत्र
नपुंसकत्वमिवात्रापि प्रथमोपपत्तेः ।

यत्तु वाचकत्वे इव शब्दार्थेऽन्वयेन द्वितीयान्तसामानाधि-
करण्याभावान्न द्वितीयेत्यूचुर्वैयाकरणनव्याः । तन्न । चन्द्र
इव मुखं पश्येत्यादेरप्यापत्तेः । अथवास्तु वाचकता ।
नचानुभूयते इत्यादिप्रयोगानुपपत्तिः । स्वस्वयुक्तनिपातान्यतरा-
र्थफलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति स्वीकारात् ।

---

१ प्रत्ययोपपत्तिरिति ख० पु० पाठः ।

न च कीदृशः समुच्चय इतिवत् कीदृशश्च इत्यपि स्यात् । तथा घटानां समुच्चय इतिवत् घटानाञ्चेत्यपि स्यादिति वाच्यम् । यथैव धातूपस्थाप्यभावनां प्रति कारकादियोगेऽपि भावनापदोपस्थाप्यभावनां प्रति नान्वयः । शब्दशक्तिस्वाभाव्यात् । तथैव च शब्दोपस्थाप्यसमुच्चये विशेषणाद्ययोग इति सिद्धान्तात् ।

ननु प्रतिष्ठते इत्यत्र गमनत्वेन रूपेण बोधो न स्यात् । ष्ठाधातो र्गतिनिवृत्त्यर्थे, अभावस्य प्रशब्दार्थत्वेऽपि गत्यभावो नास्तीत्येव प्रत्ययापत्तेर्न च तथा बोधानुभव इति चेन्न ।

धातूनामनेकार्थत्वात्तिष्ठतेरेव गतिरर्थः । प्रशब्दस्तु सकर्मकत्वबोधक[1] इति भूवादय इति सूत्रे भाष्ये एव स्पष्टत्वात् ।

न च "शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव" इत्यादौ उस्रसदृशै रससदृशान् इत्यर्थादुस्ररसपदोत्तरतृतीयाद्वितीयाभ्यां न इवार्थगतकर्मत्वकरणत्वे बोधयितुं शक्ये, अप्रकृत्यर्थादिति वाच्यम् । इवपदोत्तरलुप्ततृतीयया द्वितीयया च तद्बोधात् । न च सत्त्ववाचकत्वेनानव्ययत्वम् । लिङ्गानन्वयित्वरूपा सत्त्वस्याव्ययता[2] । एवञ्च प्रतियोगिविशिष्टः सदृश इवार्थः । तत्र प्रतियोगिनि उस्रस्याभेदान्वयः । सदृशस्य च शरेषु अभेदेन । उस्रपदोत्तर तृतीया रसपदोत्तरद्वितीया च उपमानोपमेययोः समानविभक्तित्वनियमात् । तद्बीजन्तु उपमानोपमेययोः क्रियायामन्वयः पाक्षिकः परस्परमिति बोध्यम् । एवं वाचकत्वे युक्तिसम्भवे सत्यपि द्योतकतापक्ष एव ज्यायान् । सर्वथा नैयायिकोक्तमुपसर्गाणां द्योतकत्वं निपातानां वाचकत्वमित्यर्द्धजरतीयं हेयमेव ।

इति धात्वर्थनिरूपणम् ।

---

१ आदिकर्मबोधक इति ख० पु० पाठः ।
२ सत्त्वस्याक्षतेरिति ख० पु० पाठः ।

अथ तिङामर्थो निरूप्यते । तत्र कर्तृकर्मविहिततिङा-माश्रयोऽर्थः । आश्रयत्वञ्चाखण्डोपाधिरूपं शक्यतावच्छेदकम् । वर्तमानत्वादिकालस्तु धात्वर्थव्यापारं प्रति प्रकारत्वेनान्वेति संख्या त्वाश्रये ।

अत्र नैयायिकाः । आख्यातस्य यत्न एव शक्यः । लाघवात् । यत्नार्थककरोतिना विवरणाच्च । पूर्वोच्चरितवाक्यस्योत्तरवाक्येन ह्यर्थकथनं विवरणम् । तथा चाख्यातपदं यत्नत्वावच्छिन्ने शक्तम् । यत्नत्वावच्छिन्नशक्तकरोतिधातुप्रतिपादितार्थकत्वात् । रथो गच्छतीत्यादौ आश्रये लक्षणा । न च विभक्तौ लक्षणा नास्तीति सिद्धान्तव्याकोपः । तस्यानुशासितविभक्त्यर्थातिरिक्तविभक्त्यर्थेन लक्षणेत्यभिप्रायकत्वात् । विभक्त्यर्थाविशेषणीभूतनामार्थआख्यातार्थविशेष्यः तत्रैव संख्यान्वयः । वर्तमानत्वादेः कृतावन्वय इत्याहुः । तन्न । प्रत्ययादिशक्तिग्राहकं व्याकरणमुल्लंघ्य स्वेच्छामात्रेण यत्किञ्चिदर्थकल्पनस्यानुचितत्वात् । नन्वसति बाधके व्याकरणादि शक्तिग्राहकं लाघवात् प्रकृते त्यज्यते, यथा गुणादाविति चेन्न । लाघवस्यैवासिद्धेः । तथा हि कर्तृपदस्य क्वचित् कृतौ शक्तिः, क्वचित्कर्तरीत्यनेकशक्तिकल्पने गौरवम् । तथा चान्याय्यश्चानेकार्थत्वमिति न्यायविरोधः । न च कृतौ शक्तिः कर्तरि लक्षणेति वाच्यम् । अनन्तकृतिलक्ष्यतावच्छेदकत्वे गौरवस्य शक्यतावच्छेदक इव स्पष्टत्वात् । किञ्च नहि कृतिमान् कर्ता सूत्रकारादीनां सम्मतः । किन्तु प्रधानीभूतव्यापाराश्रयत्वेन विवक्षितः । अन्यथा काष्ठानि पचन्तीति न स्यात् । तथा च लाघवात् कृतौ शक्तिरित्युक्तेर्गर्भस्रावेणैव गतत्वात् ।

यदपि यत्नार्थककरोतिना विवरणादित्युक्तम् । तदपि

न । करोतेर्यत्नार्थकत्वे दृशेरिव कर्मस्थभावकत्वाभावेन कर्मवद्भावो न स्यादित्युक्तत्वात् । किञ्च पचतीति पाचक इति विवरणादपि आख्यातस्य कर्तरि शक्तिरवश्यं स्वीकार्या । तथा च रथो गच्छतीत्यादौ न लक्षणाश्रयणक्लेशोऽपीति दिक् ।

यदपि विभक्त्यर्थविशेषणीभूत[1]नामार्थ आख्यातार्थविशेष्य इत्युक्तम् । तदपि न । देवदत्ताः पचन्ति, त्वं पचसि, भवतीत्यादिनामसाधुतापत्तेः । पाचको ब्रूते इतिवद् देवदत्तः पचति ब्रूते इत्यस्य साधुतापत्तेश्च । नचेष्टापत्तिः । सूत्रभाष्यादिविरोधेन केवलतर्केणेष्टापत्तेरनुचितत्वात् । वर्तमानत्वादेः कृतावन्वय इत्यपि न । जानातीत्यादौ कृत्यभावेनाश्रये लक्षणया धात्वर्थे एवान्वयस्यावश्यं वाच्यत्वात् ।

मीमांसकास्तु आख्यातस्य भावना वाच्या । कर्तृत्वादौ लक्षणेत्याहुः । तन्न । युगपद्वृत्तिद्वयविरोधात् ।

भावाख्याते तु साधुत्वार्थमेकवचनमेव । उष्ट्रासिकाः आस्यन्ते, हतशायिकाः शय्यन्ते इत्यादौ भाष्यकारवचनाद्बहुवचनम् । तत्र वर्तमानत्वं लडर्थः । वर्तमानत्वं प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वम् । भूतभविष्यद्भिन्नकालत्वं वा ।

भूतानद्यतनपरोक्षत्वं लिडर्थः । यत्तु भूतत्वं लडुच्चारणकालिकध्वंसप्रतियोगिक्षणवत्त्वम् । अनद्यतनं लडुच्चारणदिनभिन्नदिनवृत्तित्वम् । परोक्षत्वञ्च प्रयोक्तृवृत्ति साक्षात्करोमीत्येतादृशविषयताशालि ज्ञानविषयत्वमित्याहुः खण्डदेवादयः । तन्न । यजति स्म युधिष्ठिर इत्यादौ भूतानद्यतनपरोक्षादौ लडुच्चारणसत्त्वेन लक्षणद्वयस्याव्याप्तेः । तस्माद् भूतत्वं विद्यमानध्वंसप्रतियोगिसमय-

---

[1] नामार्थविशेषणीभूत इत्यधिकः ख० पु० पाठः ।

वर्त्त्वम् । अनद्यतनत्वमद्यतनभिन्नत्वम् । अद्यतनत्वञ्चातीतायाः पश्चार्द्धेनागामिन्याः पूर्वार्द्धेन सहितदिनत्वम् ।

लुडर्थस्तु भविष्यदनद्यतनत्वम् । भविष्यत्त्वं विद्यमानप्रागभावप्रतियोगित्वम् । ननु पचति चैत्रे भाविव्यापारप्रागभावमादाय पक्ष्यतीत्याद्यकृतिध्वंसमादाय अपाक्षीदिति स्यादिति चेन्न । आद्यकृतिप्रागभावस्यैव भविष्यत्प्रत्ययेन चरमकृतिध्वंसस्यैवातीतप्रत्ययेनाभिधानात् ।

भविष्यत्सामान्यं लृडर्थः । अनद्यतनभविष्यति भविष्यत्त्वमात्रविवक्षायां लुडाद्येव । श्वः पक्ष्याम इति यथा । एवमनद्यतनभूतेऽपि यदा भूतत्वमात्राविवक्षा तदा लुङाद्येव । ह्योऽपाक्षीदित्यादि । स्पष्टञ्चेदं "लुङ् भविष्यति गम्यादय" इति सूत्रे भाष्ये । अत्र भूतत्वमात्रविवक्षया लुङि पश्चात् ह्यः पदाद्दिनानद्यतनप्रतीतावपि न दोषः ।

लेट्लोट्लिङां कालसामान्यविध्यादिश्चार्थः । विधिर्निकृष्टस्य प्रवर्त्तनम् । निमन्त्रणमावश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । आमन्त्रणं कामचारानुज्ञा । तत्र प्रेरकस्याग्रहाभावमात्रम् । अधीष्टः सत्कारपूर्वको व्यापारः । एतत्सर्वानुस्यूतं प्रवर्त्तनासामान्यं विध्यर्थः । प्रवर्तना च प्रवृत्त्यनुकूलो व्यापारो वक्तृनिष्ठो[1] लिङादिघटितशब्दप्रयोगादिरूपा । प्रवर्त्तकत्वञ्च स्वातन्त्र्ये सति लिङामुच्चारयितृत्वमेव । वेदे शब्दनिष्ठ एव स व्यापारः प्रवर्तनारूपः । प्रवर्तकत्वञ्च प्रवर्तनाबोधकलिङ्घटितमेव । प्रवर्तना च प्रवर्तमानकालैव भासते । धात्वर्थस्तु भविष्यत्काल एव शब्दशक्तिस्वाभाव्यात् । एवञ्चैकाश्रयभविष्यत्पाकानुकूलक्रियाविषया वर्तमाना प्रवर्तनेति पचेदित्यादौ बोधः । एतेन प्रेरणाप्र-

१ कर्तृनिष्ठो इति ख० पु० पाठः ।

योऽन्यपाकवर्तमानतादशायां पचेदिति प्रयोगापत्तिरिति निरस्तम् ।

विधिलिङ्ग्युक्तमस्तु न । स्वप्रवृत्तौ स्वप्रेरणाया अकारणत्वेन तज्ज्ञानापयोगात् । इदमेवाभिप्रेत्योत्तमपुरुषो विधिशक्तिप्रतिबन्धक इति मीमांसकाः ।

अत्र नैयायिकाः । लिङादेर्बलवदनिष्टाननुबन्धित्वे, कृतिसाध्यत्वे, इष्टसाधनत्वे च प्रत्येकं शक्तिः । न तु समुदिते । कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वे, इष्टसाधनत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टकृतिसाध्यत्वे वेति विनिगमनाविरोधात् । पुष्पवच्छब्दवच्च व्युत्पत्तिवैचित्र्याद्युगपदर्थे त्रयस्यापि बोधः । विषसंपृक्तान्नभोजनचन्द्रस्पर्शमण्डलीकरणानि च क्रमेण व्यावर्त्यानि ।

ननु श्येनेनाभिचरन् यजेतेत्यादौ श्येनस्य हिंसात्वेन नरकरूपबलवदनिष्टानुबन्धित्वात्कथं विधित्वमिति चेन्न । श्येनस्य नरकसाधनहिंसासाधनत्वेऽपि हिंसात्वाभावात् । ननु किं हिंसात्वम् । मरणानुकूलव्यापारत्वं तदिति चेत्, कूपादौ विनष्टे गवि तत्कर्तुर्गोवधप्रसङ्गात् । नापि मरणोद्देशेनानुष्ठीयमानत्वे सतीति विशेषितं तत् । गङ्गामरणमुद्दिश्य कृतत्रिसन्ध्यस्तवपाठादेरपि तत्त्वापत्तेः । किन्तु मरणोद्देशेनानुष्ठीयमानत्वे सत्यदृष्टद्वारा मरणानुकूलव्यापारत्वं हिंसात्वम् । श्येनादेश्च अदृष्टद्वारा मरणानुकूलत्वेन हिंसात्वम् ।

ननु नित्यं सन्ध्यामुपासीतेत्यादौ फलाभावेनेष्टसाधनताज्ञानाभावात् कथं विधित्वमिति चेन्न । तत्रापि फलश्रुतेः ।

सन्ध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमिति ॥

यत्र तु फलं न श्रूयते तत्र विश्वजिता यजेतेत्यत्रेव स्वर्गः प्रत्यवायपरिहारो वा फलं कल्प्यते ।

न च प्रत्यवायपरिहारस्तत्प्रागभावस्तस्य च कथं फलत्वम् । प्रागभावस्याजन्यत्वादिति वाच्यम् । यत्सत्त्वे यत्सत्त्वं, यदभावे यदभाव इत्येवंरूपयोगक्षेमसाधारणजन्यत्वस्य तत्रापि सत्त्वात् । नचैवं फलकामनाधीनकर्तव्यत्वे काम्यत्वं स्यान्नतु नित्यत्वमिति वाच्यम् । न हि फलकामनाधीनकर्तव्यत्वं नित्यत्वं ब्रूमः । किन्तु यदकरणे प्रत्यवायस्तत्त्वम् ।

कर्म त्रिविधम् । नित्यं, काम्यं, नित्यकाम्यञ्चेति । नित्यं सन्ध्यावन्दनादि । काम्यं यागादि । नित्यकाम्यमेकादशीव्रतादि । वस्तुतस्तु केवलं नित्यं नास्त्येवेत्याहुः । तन्न । अनेकशक्तिस्वीकारे गौरवापत्तेः ।

मीमांसकास्तु लिङादिवाच्या भावनाऽऽख्यातवाच्यापि । तत्र लिङादिवाच्या शब्दनिष्ठत्वाच्छाब्दी । आख्यातवाच्या तु अर्थो यागादि तद्विषयिणीत्यार्थी । तदुक्तम् ।

अभिधां भावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥ इति ।

आर्थी भावना च किं केन कथमिति अंशत्रयवती । तथा च स्वर्गकर्मिका यागकरणिका प्रयाजादीतिकर्तव्यताका चार्थीभावना । शाब्द्यपि ? तथा । तथाचोक्तम् ।

लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः ।
सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते ॥ इति ।

सम्बन्धबोधः लिङ्पदे शक्तिग्रहः । प्ररोचना स्तुत्यर्थवादः । तत्राशुविनाशिनः कालान्तरभावि स्वर्गजनकत्वासम्भवाददृष्टं कल्प्यते । तदुक्तम्—

"चिरध्वस्तफलायालं न कर्मातिशयं विनेति"

अतिशयं व्यापारं यथानुभवेन स्मृतौ जननीयायां संस्कारो व्यापार इति। तद्दर्शपौर्णमासयागयोर्नव, सप्त, षड् वा पूर्वाणीति मतभेदाः। तथा हि "अमावास्यायाममावास्यया यजेत" "पौर्णमास्यां पौर्णमास्या यजेतेति" दर्शपौर्णमासौ विहितौ तदुत्पत्तिविषयाश्च षट् आग्नेयादयः। अत्र च दर्शत्रिकेन कलिकापूर्वसहकृतेनैकं समुदायपूर्वं जन्यते। एवं पौर्णमासेऽपि। ताभ्यां च समुदायापूर्वमिति न वा पूर्वीवादः। अन्ये तु कलिकापूर्वद्विकसहितेन दर्शत्रिकेण समुदायापूर्वं जन्यते। एवं पौर्णमासेऽपि, ताभ्यां परमापूर्वमिति सप्तापूर्वीवादः। अन्ये तु पञ्चजन्यापूर्वसहकृतश्चरमं साक्षादेवं फल जनयतीति षडपूर्वीवादः।

ननु अपूर्वत्वे मानाभावः। यागध्वंसस्यैव व्यापारत्वसम्भवात्। न च यागध्वंसस्य नाशासम्भवेन स्वर्गधाराया आपत्तिः। अपूर्वस्वीकारे तु स्वर्गं जनयित्वा पूर्वस्य पूर्वस्य नष्टत्वान्न दोषः इति वाच्यम्। उपान्त्यफलध्वंसस्य फलप्रतिबन्धकत्वोपगमात्। न च "धर्मः क्षरति कीर्तनादिति" श्रुतिरनुपपन्ना, यागस्य नष्टत्वादेवानाशात्। ऊर्ध्वं तस्य च ध्वंसासम्भवात्। अपूर्वसंस्कारे तु कीर्त्तनेनापूर्वनाशाभ्युपगमादुपपद्यत एवेति वाच्यम्। कीर्त्तनादीनां फलप्रतिबन्धकत्वोपगमात्। क्षरति फलभाग् न भवतीत्यर्थ इति चेन्न। कीर्त्तनादीनामाशु विनाशितया फलप्रतिबन्धकत्वासम्भवात्।

यत्तु धर्मिकल्पनातो धर्मकल्पनाया लघुत्वाद्यागादेरेव स्थायित्वं, नत्वपूर्वमिति भट्टमतम्। यागस्य स्थायित्वेन यागस्य चिरातीतत्वाद्दशायामिदानीं न यजेयमिति न स्यात्। अपूर्वस्वीकारे तु तस्यातीन्द्रियत्वात्तत्प्रत्यक्षापत्तिरित्यनेन दूषणं चक्रु-

नैयायिकनव्याः । तन्न । यागस्यापि क्रियात्वेनातीन्द्रियत्वात् । तदुक्तं भाष्ये "क्रिया सर्वा परोक्षैव" इत्यादिना । प्रत्यक्षत्वादिकं न क्रियाविशिष्टसाधनस्यैव । तथा चातीतदशायां क्रियाविशिष्टसाधनाभावात्, न यजेयमित्युपपद्यते ।

ननु यागस्य स्थायित्वे क्रियाविशिष्टसाधनत्वस्य वर्तमानत्वाद्यागः कृत इत्यादि न स्यादिति चेन्न । सूक्ष्मरूपेण सत्त्वेऽपि स्थूलरूपेणासत्त्वात् । किञ्च न यजेयमित्यादिप्रयोगोऽप्यसाधुः । विधिलङ्युत्तमो नेति पूर्वमुपपादितत्वात् । तच्चादृष्टकर्तरि स्वीक्रियते । गया श्राद्धादिस्थले तु भोक्तरि पितर्येव । अत एव शास्त्रप्रदर्शितं फलमनुष्ठातरीत्युत्सर्ग इति गीयते ।

नन्वनुष्ठातरि पुत्रे एव तदस्तु । न च यत्र श्राद्धं कृत्वा मुक्तः पुत्रस्तत्र पितुः स्वर्गाभावप्रसङ्ग इति वाच्यम् । स्वप्रवृत्तिफलजनकादृष्टनाशेऽपि तन्नाशे मानाभावात् । न च नाना पुत्रकृतगयाश्राद्धे नानादृष्टस्वीकारे गौरवमिति वाच्यम् । त्रिकोटिकुलोद्धारणेच्छया कृतगङ्गास्नानादौ नानादृष्टस्वीकारगौरवस्य भोक्तरि अदृष्टस्वीकारेऽपि गौरवस्येति तुल्यत्वादिति चेन्न । स्वर्गसमानाधिकरणादृष्टस्वीकारे लाघवात् । न च पुत्रेण गयाश्राद्धं कृत्वा संकीर्त्तनादिकृतं, तत्र पितुः स्वर्गानापत्तिरिति वाच्यम् । इष्टापत्तेः । पुत्रस्य बलपुष्ट्यादिकामनया यत्र पित्रा कर्मकृतं पुत्रेण कर्मनाशस्पर्शादि कृतं तत्र फलोपपत्तौ इष्टापत्तेरेवाङ्गीकरणीयत्वात् इति दिक् । विस्तरस्तु अस्मत्कृताख्यातवादे द्रष्टव्यः ।

लङर्थस्त्वनद्यतनभूतत्वम् । लुङ् भूतत्वमात्रम् । लृङर्थस्तु हेतुहेतुमद्भावविशिष्टक्रिया[2] । अयं भूते भाविनि च । दृष्टो मया

---

१ तु इति ख० पु० पाठः । २ क्रियापत्तिरिति ख० पु० पाठः ।

भवतः पुत्रोऽन्नार्थी चंक्रम्यमाणः, दृष्टश्चापरो द्विजो ब्राह्मणार्थी यदि सेवते, न दृष्टोऽभविष्यत्ततोऽभोक्ष्यत्, न तु भुक्तवानित्यादौ भूतेऽपि प्रयोगदर्शनात्।

इति तिङर्थनिरूपणम्।

अथ सनाद्यर्थो निरूप्यते। सनर्थ इच्छा। तत्र धात्वर्थस्य कर्मत्वसमानकर्तृकतया तदुभयसम्बन्धेनान्वयः। क्वचित्सम्भावनापि। तत्रैव वर्त्तमानत्वाद्यन्वयः। एवञ्च पठितुमिच्छति पिपठिषतीत्यत्र एकनिष्ठा पाठगोचरवर्त्तमानेच्छेत्यर्थः।

नैयायिकास्तु कर्तृप्रत्ययस्थले सनप्रत्ययार्थेच्छायाः धात्वर्थविशेष्यतया भानम्। कर्मप्रत्ययस्थले च तस्या धात्वर्थविशेषणतया भानम्। अत एव चिकीर्ष्यते पाकभेद इत्यादौ पाकरूपे कृति कर्मणि आख्यातः सङ्गच्छते। तत्रापि वर्तमानत्वादेरिच्छायामन्वयः। प्रकृत्यर्थैकदेशेऽपि नीलतरो घट इत्यादिस्थले नीलरूपादौ तरबाद्यर्थातिशयादित्याहुः। तन्न। प्रत्ययार्थः प्रधानमिति नियमभङ्गापत्तेः। व्युत्पत्तिद्वयकल्पने गौरवाच्च।

तस्मात् धात्वर्थविशेषितैवेच्छा सनप्रत्ययार्थः। चिकीर्ष्यते पाक इत्यादौ तु उत्पत्त्यनुकूलक्रियाविषयिणीच्छा सन्नन्तधात्वर्थः। अन्यमते तु कृतिविषयिणीच्छा। उभयथापि जिज्ञास्यते घट इत्यादौ तव मते इच्छाविषयज्ञानविषये घटस्य धात्वर्थकर्मत्वेन तत्राख्यातवन्मम मतेऽपि पाकस्य धात्वर्थकर्मत्वेन तत्राख्यातसम्भवात्। एकदेशेऽपि कारकान्वयस्य व्युत्पन्नत्वात्।

एवं क्यजादीनामपीच्छैवार्थः। यत्तु सुबन्तोत्तरेच्छार्थविहितक्यज्काम्यजन्तस्य धातोरिच्छार्थकतया सनप्रत्ययाविशेषेऽपि सन्नन्तधातुवन्न सकर्मकत्वम्। तदन्तर्गतप्रातिपदिकस्यैव

१ स तेनेति ख० पु० पाठः।

कर्मबोधकतया इच्छायाः कर्माकांक्षाविरहादित्याहुर्गदाधरप्रभृतयः । तन्न । क्यजन्ताकर्मकतासाधकहेतोः सन्नन्तेऽपि सत्त्वेनाकर्मतापत्तेः । एतावान् परं विशेषः । तत्र प्रातिपदिकस्य कर्मबोधकत्वं, सन्नन्ते तु धातोरिति । किञ्च शिशयिषतीत्यादिसन्नन्तेऽपि अकर्मकत्वदर्शनेन, ओदनस्य पाकीयतीत्यादिक्यजन्तेऽपि सकर्मकत्वदर्शनेन च अकर्मकत्वसाधकहेतोरप्रामाणिकत्वात् ।

यङः पौनःपुन्यबाहुल्यकौटिल्यगर्हादिद्योत्यानि । णिजर्थः प्रेरणा । लिङर्थप्रेरणायां वक्तैव प्रेरकः । णिजर्थप्रेरणायां तद्भिन्नोऽपीति भेदः । कर्तृकर्मकृतामाश्रयोऽर्थः । भावकृत्सु एधितव्यमित्यादौ धात्वर्थानुवादकत्वम् । पाक इत्यादौ तु सिद्धावस्थापन्नः । शब्दशक्तिस्वाभाव्यात् । एवं क्त्वार्थो भाव एव । "अव्ययकृतो भावे" इति वचनात् । समानकर्तृत्वं पूर्वकालत्वञ्च क्त्वाद्योत्यम् । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यत्र पूर्वकालिकदर्शपूर्णमासवैशिष्ट्यं सोमे विधीयते । मुखं व्यादाय स्वपितीत्यत्र तु व्यादानोत्तरस्वापपूर्ववर्तित्वम् । अत्र मासवर्षादिना व्यवधानेऽपि सति तात्पर्ये क्त्वाप्रत्ययो भवत्येव ।

प्राभाकरमते समानकर्तृत्वमेव क्त्वावाच्यम् । मणिकृन्मते आनन्तर्यमेव । नैयायिकनव्यास्तु समानकर्तृत्वं पूर्वकालत्वञ्च क्त्वावाच्यमित्याहुः । तन्न । तत्र प्रत्ययार्थविशेष्यत्वेन क्रियाप्राधान्यविरहात् । आभीक्ष्ण्ये द्वित्वाभावापत्तेः । गुणीभूतक्रियामादाय तत् प्रवृत्तौ तु पाचकादावतिप्रसङ्गः । भावविधायकानुशासनविरोधाच्चेति दिक् ।

इति सनाद्यर्थनिरूपणम् ।

अथ समासशक्तिर्निरूप्यते। तत्र समासत्वं सङ्केतविशेष सम्बन्धेन समासपदवत्त्वमेव। "प्राकडारात् समास" इत्यधिकार-पठितसंज्ञावत्त्वम् वा । यत्तु समासत्वं विभक्तिशून्यपूर्वपदक नामसमुदायत्वम्। अत्र विभक्तिशून्यपूर्वपदकत्वं विभक्तिशून्य-पूर्वपदघटितशाब्दबोधप्रयोजकानुपूर्वीमत्त्वम् । तेन न घट इत्यादौ नातिव्याप्तिः। घटो नेत्यानुपूर्वीज्ञानत्वेनैव शाब्दबोध हेतुत्वादित्याहुर्जयरामादयः। तन्न। पर्यभूषत्, पचत, भृज्जत, जहिजोडमित्यादितिङन्तघटितसमासेऽव्याप्तेः । गत्रित्यग्रमाहे-त्यादावतिव्याप्तेश्च। किञ्चाभावप्रतियोगी घट इति शाब्दबोधेन घट इत्यानुपूर्व्या एव हेतुत्वेन तत्राप्यतिव्याप्तिदार्ढ्याच्च।

समासे शक्तिरिति वैयाकरणाः। अत एव राजपुरुषैक-देशे राज्ञि वाक्ये इव न ऋद्धस्येत्यादिविशेषणान्वयः । तथा राज्ञः पुरुषोऽश्वश्चेतिवद् राजपुरुषोऽश्वश्चेति न प्रयोगः। एकत्र विशेषणतयान्वितस्यान्यत्र विशेषणतयान्वयायोगात्। एवं राज्ञः पुरुषो भार्यायाश्चेतिवदेकत्र द्वयमिति विषयताशालि बोधजनकं राजपुरुषो भार्यायाश्चेत्यपि न।

व्यपेक्षैव सामर्थ्यमिति नैयायिकमते तु कण्ठे कालः, दास्याः पुत्र इत्युलुक्समासे लक्षणाया अभावेन सुन्दरेत्यादि विशेषणान्वयोऽपि स्यात्। किञ्च नीलोत्पलमिति व्यस्त इव समस्तेऽपि उद्देश्यविधेयभावेनान्वयः स्यात्। स च सर्वनये विरु-द्धः। किञ्च पङ्कजमित्यादावपि डप्रत्ययस्यैव पद्मत्वविशिष्टलक्षण-यैवोपपत्तौ विशिष्टशक्तिरुच्छिद्येत। नचेष्टापत्तिः। अपसिद्धान्तात्।

मीमांसकास्तु विशिष्टार्थो लक्ष्य इत्याहुः । यत्तु तत्र समासाः षट्। कर्मधारय, द्विगु, तत्पुरुष, बहुव्रीहि, द्वंद्वा, व्ययीभावभेदादित्यूचुर्जयरामादयः । तन्न। पूर्वकालन्द्वचयती

तात्पर्य्यतकूलव्यापाराश्रय इत्येतदर्थकस्य पूर्वं भूतो भूतपूर्व इति समासस्यासंग्रहात् ।

तत्राव्ययीभावाधिकारपठितसमासत्वमव्ययीभावत्वम् । उपकुम्भमित्यादौ कुम्भपदस्य कुम्भसमीपे लक्षणा । उपपदं तात्पर्यग्राहकम् । अथवोपपदस्यैव सोऽर्थः, कुम्भपदं तात्पर्यग्राहकमिति विनिगमनाभावाद्विशिष्टे शक्तिः ।

एतेन कुम्भपदस्य कुम्भसम्बन्धिनि तस्य चोपाद्यर्थे लक्षणा । एकदेशे च सामीप्ये कुम्भादिसम्बन्धिनस्तादात्म्येनान्वय इति पदद्वयलक्षणापेक्षा कुम्भपदस्यैव । कुम्भसमीपोपपदं च तात्पर्यग्राहकमिति दीक्षितोक्तमपास्तम् ।

यत्तु नियमतः पूर्वपदार्थविशेष्यकबोधजनकसमासत्वमव्ययीभावत्वम् । अर्द्धपिप्पलीत्यादिवारणाय नियमत इत्यूचुर्जयरामादयः । तन्न । उन्मत्तगङ्गमित्यादावव्याप्तेः । तत्पुरुषाधिकारपठितसमासत्वं तत्पुरुषत्वम् । तत्रापि समुदाये शक्तिः ।

यत्तु नैयायिकनव्याः समासे न समुदाये शक्तिः । राजपुरुष इत्यादौ राज्ञः पदस्य राजसम्बन्धिनि लक्षणयैवोपपत्तेः । अनन्यलभ्यो हि शब्दार्थ इति न्यायात् । किञ्च तत्पुरुषात् कर्मधारयस्य लक्षणाया अभावेन यल्लघुत्वं तन्न स्यात् । उभयत्र शक्तिसाम्यादित्याद्यूचुः । तन्न । शक्त्यपेक्षया लक्षणायाः शक्तिज्ञानतात्पर्यग्रहादिसापेक्षत्वेन गुरुत्वात् । नचानन्येति न्यायविरोधः । संसर्गालभ्ये वृत्तिकल्पनमन्याय्यमिति तदर्थात् । अर्थशब्दस्य वृत्तिपरत्वेनैव व्याख्यातत्वात् ।

किञ्च "स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयुञ्महे" इति न्यायादस्ति लक्षणायां बीजाकांक्षा । यथा गङ्गायां घोष इत्यादौ शैत्यपावनत्वादि बीजं, न तथा राजपुरुष इत्यादौ । किञ्च

पङ्कजमण्डपोद्भिदाश्वकर्णरथन्तरेत्वादिसमासेषु शक्तिस्वीकारस्य सर्वतन्त्रसिद्धत्वात् तत्राप्यवयवलक्षणयैव निर्वाहे घटादावपि प्रकृतेः प्रत्ययस्य वा लक्षणयैवोपपत्तौ विशिष्टशक्तिरुच्छिद्येत। किञ्च शक्तिलक्षणाव्यवहारः प्रसिद्ध्यप्रसिद्धिमूलकः। यथा गङ्गापदस्य प्रवाहे प्रसिद्धत्वात् तत्र शक्तिस्तटे लक्षणा। तथा राजसम्बन्धी पुरुष इत्यर्थे राजपुरुष इत्यस्याप्यस्ति प्रसिद्धिः। निषादस्थपत्यादिशब्दानां कर्मधारयतत्पुरुषबहुव्रीहिसमासभेदेन भिन्नार्थकानां तात्पर्याद्विशेषावगतिन्यायात्, क्व तात्पर्यमिति सन्देहे "सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वमिति" न्यायात्कर्मधारयलाभः।

वस्तुतस्तु "तत्पुरुषात् कर्मधारयो लघीयानिति" न्यायो निर्मूलः। सुरपतिरित्यादौ सुराणां पतिरिति तात्पर्ये तत्पुरुषस्यैव प्रवृत्तेः। निषादस्थपतिं याजयेदित्यत्र तु "लिङ्गदर्शनाच्चेति" सूत्रे कूटं दक्षिणाकूटं हि निषादानामेवोपकारकमिति लिङ्गोपन्यासात्तात्पर्यनिर्णयः।

ननु स्थपतिशब्दः स्वामिपर्यायः श्रेष्ठपर्यायो वा। उभयथापि गुणवचनत्वात्, जातिगुणयोगे गुणस्यैव पूर्वनिपातनियमात्, कर्मधारप्रयोगानुपपत्तिरिति चेन्न। तस्य राजदन्तादित्वात्। किञ्च वषट्कर्तुः प्रथमभक्ष इत्यत्रानुवादेन प्राथम्याविधानापत्तिमाशङ्क्य प्रथमभक्षसमस्तमेकपदं तत्र त्वेकप्रसरत्वान्नैकभक्षणमुद्दिश्य प्राथम्यविधानं युक्तमिति भक्षान्तरविधिः। तथा त्र्यङ्गैः स्विष्टकृतं यजतीत्यत्र पशौ नोदकप्राप्तस्विष्टकृत्प्रधानहविर्भ्यो हृदयादिभ्य एकादशभ्योऽपि कर्तव्यत्वेन प्राप्त इति त्र्यङ्गैरिति बहुवचनं त्र्यङ्गानुवादेन त्रित्वविधानार्थमित्याशङ्क्यैकं हीदं समस्तं पदं तत्सर्वमुद्देश्यविधेयकं वा युक्तमुत्तरार्द्धविधाने एक प्रसर-

ताभङ्गात्रित्वविशिष्टाङ्गान्तरविधिरिति बाधलक्षणे व्यवस्थितमेकार्थीभावानभ्युपगमेऽसङ्गतं स्यात् ।

यत्तु समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामपदकसमासत्वं तत्पुरुषत्वम् । पञ्चमूलीत्यादिवारणाय ससन्तम् । नीलोत्पलादिवारणाय लुप्तेत्यादि । नचानयोस्तत्पुरुषत्वमिष्टम् । मुख्यतत्पुरुषस्याभावात् । तत्पुरुषसंज्ञाविधानन्तु अब्राह्मण इत्यादौ नकारलोपाद्यर्थे गौणम् । अब्राह्मणमित्यादिवारणाय पूर्वेतीत्यूचुर्जयरामादयः । तन्न । पञ्चराजं परमराज इति द्विगुकर्मधारये मुख्यतत्पुरुषत्वाभावे टजूभावापत्तेः । गौणमुख्ययोरिति न्यायात् । "न लोपो नञ" इत्यस्य तत्पुरुषानपेक्षत्वेन नलोपाद्यर्थे गोणमित्युक्तेरनुपयोगाच्च । किञ्चानुशासनानुशासित्वेन सञ्ज्ञाद्वयस्यापि मुख्यत्वे सम्भवति स्वेच्छामात्रेण गौणत्वकल्पनस्यायुक्तत्वात् ।

अत्रेदं वक्तव्यम् । नञ्तत्पुरुषस्य कर्मधारयत्वं व्याकरणपरिभाषया, उत स्वपरिभाषया ? । नाद्यः । तथा हि "तत्पुरुषः समानाधिकरणः कर्मधारयः" इति कर्मधारयलक्षणम् । तत्र सामानाधिकरण्यं नाम प्रवृत्तिनिमित्तभेदे सति एकार्थविशेष्यकबोधजनकत्वम् । तथा च भेदसम्बन्धेन यत्रान्वयः स कर्मधारयः । अब्राह्मण इत्यादि नञ्तत्पुरुषे तु नञोऽभावोऽर्थः । तथा चाभावप्रतियोगी ब्राह्मण इत्यर्थः । एतेन अस अत्वं भवतीत्यादावुत्तरपदार्थप्राधान्यप्रयुक्तकार्यसिद्धिः । ब्राह्मणाभाव इत्यादिबोधः । उत्तरपदार्थप्राधान्यप्रयुक्तकार्यसिद्धिस्तु अकोरिति लिङ्गादिति बोध्यम् । नच प्रतियोगितासम्बन्धेनान्वये नामार्थयोरिति न्यायविरोधः । नञो द्योतकत्वात् । वाचकत्वपक्षे तु निपातेतरसमासेतर(?)विषयत्वस्य वा स्वीकारात् । असमस्तनञस्तु क्रिययैवान्वयात् । घटो

नास्तीत्यादौ घटाभिन्नाश्रयकास्तित्वाभाव इति बोधः । नाद्यः । नैयायिकानामपि तत्र कर्मधारय इति व्यवहाराभावात् । फलाभावाच्च ।

इत्थं हि नैयायिकसरणिः । नञः संसर्गाभावान्योन्याभावार्थौ । तत्राद्यस्त्रिधा । प्रागभावः, प्रध्वंसाभावोऽत्यन्ताभावश्चेति । विनाश्यभावत्वं प्रागभावत्वम् । जन्याभावत्वं ध्वंसत्वम् । त्रैकालिकसंसर्गाभावत्वमत्यन्ताभावत्वम् । तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकाऽभावत्वमन्योन्याभावत्वम् । तत्रात्यन्ताभावान्योन्याभावौ नित्यौ । नित्यत्वञ्च प्रागभावप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् । एवञ्चाघटः पट इति नञ्तत्पुरुषे घटस्य प्रतियोगितासम्बन्धेन नञर्थे लाक्षणिकतदर्थस्याभावत्वम् । पटेऽभेदेनैवान्वयः । तथा च घटप्रतियोगिकाभाववदभिन्नः पट इति बोधः । ननु स्वर्गी ध्वस्त इति "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः, सति विशेष्ये बाधे" इति न्यायेन गौर्नित्येत्यादौ नित्यत्वस्य गोत्वेऽन्वयापत्त्या "पदार्थः पदार्थेनान्वेतीति" नियमस्यावश्यकतया नञर्थाभाववदंशे भावे घटस्य प्रतियोगितासम्बन्धेन कथमन्वय इति चेत् । तस्य ससम्बन्धिकातिरिक्तविषयत्वात् ।

ननु घटस्य प्रतियोगितासम्बन्धेनाभावेऽन्वये तस्य चैकत्वात् घटौ नास्तीति प्रयोगापत्तिरिति चेन्न । भावनान्वयभावप्रतियोगिनि संख्यान्वयनियमात् । तत्र घटत्वावच्छिन्नप्रतियोगिताकाभावविषयकशाब्दत्वावच्छिन्नं प्रति समानाधिकरणपदासमभिव्याहृतघटपदसमभिव्याहृतनञ्पदज्ञानत्वेन कारणता । तेन नीलो घटो नास्तीत्यत्र न घटत्वावच्छिन्नाभावधीः । न पचतीत्यत्र पाकानुकूलकृत्यभाववांश्चैत्र इति बोधः । जातौ

सत्ता नास्तीत्यत्र जातिवृत्त्यस्तित्वाभाववती सत्तेति बोधः ।

ननु सम्बन्धसामान्यावच्छिन्नजातिवृत्तित्वाभावो वा, समवायसम्बन्धावच्छिन्नजातिवृत्तित्वाभावो वा ? । नाद्यः । जन्यमात्रस्य कालोपाधितया मूर्तिमात्रस्य दिगुपाधितया कालिकदैशिकविशेषणतयोस्तत्रासम्भवेऽपि एकार्थसमवायित्वस्य सम्भवात् । नान्त्यः । प्रतियोग्यप्रसिद्धेः । एवं जातिर्न सत्तावृत्तीत्यत्रापीति चेत्, अयोग्यमेवेदं वाक्यमित्येके ।

अन्ये तु सत्तापदं सत्तासमवायपरम् । सप्तम्यर्थश्चानुयोगित्वम् । तथा च जात्यनुयोगिकत्वाभाववान् सत्तासमवाय इति बोध इत्याहुः । अन्ये तु जातिनिरूपितसाक्षात्सम्बन्धावच्छिन्नवृत्तित्वाभावः प्रतीयत इत्याहुः ।

एतेन समासप्रयुक्तलक्षणाशून्यतुल्याधिकरणनामद्वयघटितसमासत्वं कर्मधारयत्वमिति तल्लक्षणं कृत्वा नञ्तत्पुरुषस्य कर्मधारयत्वं वदन्तो जयरामादयो मतद्वयेऽपि तदभावादुपेक्ष्याः ।

द्विगुश्चेति सूत्रविहितसंज्ञात्वमेव द्विगुत्वम् ।

यत्तु संज्ञाविषयान्यत्वे सति संख्यावाचकपूर्वपदतुल्याधिकरणसमासो द्विगुः । तद्धितार्थेऽभिधीये यथा । पञ्चकपालः । उक्तार्थत्वान्न तद्धितप्रत्ययः । तद्विषये यथा । पाञ्चनापितिः । अत्र समासेन तद्धितार्थानभिधानात् तद्धितप्रत्ययः इत्याहुर्जयरामादयस्तन्न । पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यत्रापि समासेन तद्धितार्थस्योक्तत्वात् तदनुत्पत्तौ गोरताद्धित इति टजापत्तेः। पञ्चकपाल इत्यत्र तद्धितार्थे विषय इत्यनेन समासे तद्धितोत्पत्तौ तस्य लुकि प्रयोगासिद्धौ निर्बाधायां तद्वाक्यस्य व्यर्थत्वाच्च ।

बहुव्रीह्यधिकारपठितसमासत्वं बहुव्रीहित्वम् । स च तद्गुणातद्गुणभेदेन द्विधा । तत्र तद्गुणत्वं नाम विधेयान्वयिस्वघटकान्वय-

वार्थकत्वम् । यथा लम्बकर्णमानयेत्यादौ । विधेयानन्वयिस्वघटकावयवार्थकत्वमतद्गुणत्वम् । यथा चित्रगुरित्यादौ । अत्रापि शक्तिरेव । तेनेन्द्रापिताधिकरणं सङ्गच्छते ।

यत्तु नियमतः समासप्रयुक्तलाक्षणिकोत्तरपदकसमासो बहुव्रीहिः । चित्रा गौर्यस्येति वाक्याच्चित्राभिन्ना गौश्चैत्रादिस्वत्वाश्रय इति बोधाद्गोपदे चित्रगोवृत्तिस्वत्वप्रतियोगिनि लक्षणा । चित्रापदं तात्पर्यग्राहकम् । यद्वा गोपदं स्वामिनि लक्षणा । एकदेशे गवि चित्राभेदान्वयः । यद्वा गोपदादिना शक्त्या गवादिलक्षणया स्वाम्यादिर्बोध्यते । एकपदार्थयोरपि परस्परमन्वयः। शोभनचित्रगुरित्यत्र तु चित्रपदस्य शोभनाचित्रगोसम्बन्धिपरता। शोभनपदं तात्पर्यग्राहकम् । चैत्रदत्तधन इति समासे चैत्रकर्तृकदानकर्मकधनसम्बन्धी मैत्र इति बोधः ,। आरूढो वानरोऽयमिति विग्रहे वृक्षवृत्ति उपरिदेशावच्छिन्नसंयोगानुकूलक्रियाश्रयो वानर इति बोधः । समासे तु आरोहणकर्तृकवानरसम्बन्धी वृक्ष इति बोधः । एष समानाधिकरणबहुव्रीहिरित्याहुर्जयरामादयस्तन्न । लक्षणाश्रयणे गौरवात् । विशिष्टे शक्तिरेवोचिता । नच लक्षणैव लघीयसी । तत्पुरुषात्कर्मधारयो लघीयानिति सिद्धान्तभङ्गापत्तेः । लक्षणायां हि "अनन्यलभ्यो हि शब्दार्थ" इत्येव मूलम् । तस्य लक्षणया लभ्ये शक्तिकल्पनमन्याय्यमिति नार्थः । किन्तु संसर्गादिना लभ्ये वृत्तिकल्पनमन्याय्यम् । अथवा अनन्यलभ्यस्तात्पर्यग्रहादिनिरपेक्षः शब्दार्थः शब्दशक्यः । नानार्थस्थले तात्पर्यग्रहादिनाभिधानियमनमात्रम्। नतु शक्ये तदपेक्षा । चैत्रदत्तधन इत्यस्य समानाधिकरणबहुव्रीहित्वं यदुक्तं तत्त्वयुक्तमेवेति दिक् ।

चार्थे द्वंद्व इति सूत्रविहितसमासत्वं द्वंद्वत्वम् । द्वंद्वव्यवहार·

विषयत्वं वा । तत्र समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र समुच्चयस्त्वनेकस्यैकधर्मावच्छिन्ने विशेष्यतासम्बन्धेन प्रकारतासम्बन्धेन वान्वयः । यथा देवदत्तः पचति हसति च। ईश्वरं गुरुं च भजस्वेत्यादौ । एकदेवदत्ताश्रयिका वर्तमाना पचिक्रिया हसिक्रिया च । ईश्वरकर्मका गुरुकर्मका च वर्तमाना भजनक्रियेति बोधः । अन्यतरस्यान्यनिष्पादकयत्ननिष्पाद्यत्वरूपे आनुषङ्गिकत्वेऽन्वाचयः । यथा भिक्षामट गां चानयेत्यादौ । अत्रानुषङ्गिकभिक्षाटनव्याप्यमिति बोधः[1] । परस्परनिरूपितसाहित्यवतामेकस्मिन्नन्वय इतरेतरयोगः । यथा प्लक्षन्यग्रोधौ । सहितप्लक्षन्यग्रोधकर्मकं छेदनमिति बोधः । अत्र साहित्यं विशेषणम् । साहित्यश्चाखण्डोपाधिः । परस्परसापेक्षाणां तिरोहितावयवभेदः समूहः समाहारः । अयं च विशेष्यः । यथा पाणिपादम् । तत्राद्ययोर्न समासः । असामर्थ्यात् । अत्रापि विशिष्टे शक्तिः । तथा च विग्रह इव समासे उक्तार्थत्वात्साहित्यबोधकचशब्दाप्रयोगाच्च । एवं पुष्पवन्तादिपदे साहित्यमपि शक्यतावच्छेदकम् । अतः एकयोक्त्येत्यस्यैकशक्यतावच्छेदकप्रकारेणेत्यर्थः । एवं च पुष्पवन्तादिपदं चन्द्रसूर्ये च शक्तम् । व्यासज्यवृत्त्यवच्छेदकतास्वीकारात् । एवञ्च न तत एकतरमात्रबोधः । नापि शक्त्यानन्त्यम् ।

यच्चं भूतले घटपटौ न स्त इत्यत्र भूतलवृत्त्यभावे घटपटयोरुभयत्वावच्छिन्नप्रतियोगितासम्बन्धेनान्वयः इति द्विवचनस्य प्रयोगसाधुतामात्रम् । दाराः सन्तीतिवदिति भावानन्दा आहुः । तन्न । "सम्भवत्यर्थसाधुत्वे शब्दसाधुत्वस्यान्याय्यत्वमिति" न्यायस्य कोशादिना दृष्टान्ते

(१) यत्तु ख० पु० पाठः ।

बाधसम्भवेऽपि दार्ष्टान्तिके स्वेच्छामात्रेण तदयोगात् । दारा अस्तीतिवद् भूतले घटपटं नास्तीत्यपि प्रयोगापत्तेश्च[1] । यत्तु परस्परानन्वितसमस्यमाननिखिलपदार्थबोधकसमासत्वं द्वन्द्वत्वम् । धवखदिरावित्यादौ धवखादिरादिपदस्य धवखदिरसाहित्याश्रये लक्षणया, धवखादिरशक्तिभ्यां वा परस्परानान्वितधवखदिरबोधकत्वाल्लक्षणसङ्गतिः ।

स च द्विविधः । इतरेतरयोगसमाहारभेदात् । यत्रावयवार्थप्राधान्यं तत्रेतरेतरयोगः । प्राधान्यं विभक्त्यर्थान्वायित्वम् । अत एव द्विवचनं तत्र । यथा धवखदिरौ । यत्र संहतिः प्रधानं तत्र समाहारः । संहतिः साहित्यम् । साहित्यस्यैकवचनमेव । तत्र नपुंसकलिङ्गता चानुशासनात् । यथा हस्त्यश्वं, पाणिपादमित्यादौ । साहित्ये[2] सामानाधिकरण्यसम्बन्धेन कर्मत्वान्वय इति प्राञ्चः ।

नव्यास्तु हस्त्यश्वमानयेत्यादौ हस्त्यश्वपदे शक्तिभ्यामेव हस्त्यश्वबोधके । नतु साहित्यबोधके लक्षणा । एकवचनन्तु अनुशासनबलात् । समाहारसंज्ञा च नदीसंज्ञावत्पारिभाषिकी । अतएव हस्त्यश्वमित्यादौ विना द्रव्यपदे लक्षणायामन्वयबोधः । यदि च हस्त्यश्वं प्रमेयमित्यादौ समाहारबोधोऽनुभवसिद्धस्तदा लक्षणेत्याहुः ।

यत्तु समुच्चयार्थचकारेण यत्र प्राधान्येन क्रियासम्बन्धो विवक्षितो धवं छिन्धि, खदिरां छिन्धीत्यादौ प्राधान्येन छिदाक्रियाभेदो यत्र चान्वाचयार्थचकारेण प्राधान्येन गुणभावेन स विवक्षितो धवं छिन्धि सामर्थ्ये खदिरञ्चेत्यादौ । यत्र सपुत्रो

(१) प्रयोगानापत्तेश्चेति ख० पु० पाठः ।

(२) ख० पु० हस्तिनोऽश्वस्य च साहित्यमित्याकारिका तत्रान्वयधीः इत्थञ्च हस्त्यश्वमानयेत्यादौ इत्याधिकः पाठः ।

गच्छतीत्यादौ पुत्रस्यैकक्रियान्वयित्वेऽपि विशेषणत्वेनैव तदन्वयः । तत्र द्वन्द्वाभावः साहित्यलक्षणायामेव निर्वहति । तुल्यवदेकक्रियान्वयित्वसाहित्यस्योक्तेष्यभावात् । अतएव "चार्थे द्वन्द्व" इत्यत्र चार्थः समुच्चयान्वाचयेतरेतरो गृह्यते । अन्वाचयः, समाहारः, इतरेतरः, समुच्चय इत्यर्थचतुष्टयस्य चार्थत्वात् । सामाहारः साहित्यम् । इतरेतरः साहित्यविशिष्टम् । अतएव यत्कर्तव्यं तदनया सहेत्यादावपि पत्न्या सहत्वं न तु साहित्यम् । पत्न्याः कथञ्चिदनुमितिद्वारैवोपयोगेन व्यापारसाम्याभावात् । तत्र चैत्रमैत्रौ स्थितिगतिमन्तावित्यादि यथासंख्यस्थले एकक्रियान्वयित्वाभावेऽपि द्वन्द्वादिसाहुर्जयरामादयस्तन्न । राजपुरुष इत्यादौ शक्तिभ्यां परस्परानान्वितराजपुरुषबोधकत्वाद् द्वन्द्वलक्षणातिव्याप्तेः । परस्परान्वय एव समासः इत्येतद्बोधक "समर्थः पदविधि"रित्यनुशासनविरोधाच्च ।

अन्यथा धनं राज्ञः पुरुषो भार्यया इत्यादावपि षष्ठीसमासापत्तेः । यदपि खदिरादिपदे लक्षणेत्युक्तम् । तदपि न । विनिगमनाविरहेण धवादिपदेऽपि तत्स्वीकारात् । उभयत्र तत्स्वीकारे गौरवात् । नच प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादव्यवहितपूर्वपदस्यैव प्रकृतित्वात्तत्रैव लक्षणेति वाच्यम् । बहुपटुरित्याद्यव्याप्त्या स्त्रीयतीत्यादौ स्त्रियां वतुवर्थान्वयानुपपत्त्या अव्ययीभावे पूर्वपदस्य द्वन्द्वे उभयोः प्रकृतित्वमिति भवत्सिद्धान्तेन चाव्यवहितपूर्वपदस्य प्रकृतित्वमिति वक्तुमशक्यत्वात् । तस्मात्प्रत्ययविधानावधित्वमेव प्रकृतित्वम् ।

यदपि नव्यास्तु इत्यादिना पारिभाषिकीत्यन्तेन नैयायिकनव्यमतमुपन्यस्तं तदपि न । समाहारे वृत्त्यस्वीकारे घटपटमित्यादावेकवचनविधायकानुशासनाभावेनैकवचनानापत्तेः ।

समाहरणं समाहारोऽनेकस्यैकीकरणमेको धर्म इत्यन्वर्थमूलकसमाहारद्वन्द्व इति व्यवहारोच्छेदापत्तेश्च । नच नदीवृद्ध्यादिसंज्ञावत् समाहारसंज्ञापि पारिभाषिकीति वाच्यम् । दृष्टान्ते यूस्त्र्याख्याविति परिभाषासत्त्वेऽपि दार्ष्टान्तिके तदभावात् । किञ्च द्वन्द्वे साहित्यसमानानङ्गीकारे[1] अग्निषोमौ, इन्द्राग्नीत्यादावेकदेवतात्वं न स्यात् ।

यदपि यश्चेत्यादिना व्यापारसाम्याभावादित्यन्तेनान्यग्रन्थमुपन्यस्य चैत्रमैत्रौ स्थितिगतिमन्तावित्यादियथासंख्यस्थले एकक्रियान्वयित्वाभावेऽपि द्वन्द्वादित्यनेन दूषयांचक्रुस्तदपि न । तादृशप्रयोगस्य साधुत्वे प्रमाणाभावात् । असाधुत्वे च "लोचनाधरकृताह्वतरागा विकृताविकृता देहं घ्नन्ति ते वर्द्धयन्ति च"त्यादेरसाधुत्वमित्याद्यन्तौ टकिताविति सूत्रस्थभाष्यकैयटयोरेव मानत्वात् । यदि तादृशप्रयोगोऽपि प्रामाणिकस्तर्हि भवत इत्यध्याहारेण बोध्यः ।

यत्तु घटकलशावित्यादिद्वन्द्ववारणाथ पदार्थतावच्छेदकभेदस्यैव द्वन्द्वनियामकत्वान्नीलघटयोरैक्यं शित्ररामयोरभेद इत्यादौ न द्वन्द्वानुपपत्तिरित्यूचुर्जयरामादयस्तन्न । वक्रदण्डश्च कुटिलदण्डश्चेत्यादौ पदार्थतावच्छेदकसत्त्वेन द्वन्द्वापत्तेः । यदि तत्र विरूपाणामित्यनुशासनेन निर्वाहं ब्रूषे, तर्हि तत एव घटकलशावित्यादिवारणसम्भवे पदार्थतावच्छेदकभेदस्यैव द्वन्द्वनियामकत्वे फलाभावः । प्रत्युत नीलघट इति कर्मधारयानापत्तिश्च । नच पदार्थतावच्छेदकभेदे द्वन्द्व एवेति न नियमः । किन्तु पदार्थतावच्छेदकभेदे एव द्वन्द्व इति न कर्मधारयानुपपत्तिरिति वाच्यम् । समुच्चयस्य वक्तुमशक्यत्वात् । तस्मात्पदार्थ-

1. साहित्यभावानङ्गीकारे इति ख० पु० पाठः ।

भेदे द्वंद्वः। सामानाधिकरण्ये सति पदार्थतावच्छेदकभेदे कर्मधारयः । नीलघटयोरैक्यं शिवरामयोरभेद इत्यादौ समासकाले सामानाधिकरण्येनान्वयाविवक्षणाद् द्वन्द्वः । तत्त्वे तु कर्मधारय इति विवेकः ।

यत्तु नचैवं घटावित्यादौ द्वंद्वासम्भवात्तदपवादकसरूपशेषानुपपत्तिः । द्वन्द्वविषये एव तदुत्पत्तेरिति वाच्यम् । घटावित्यादौ सरूपशेषानङ्गीकारात् । एकेनापि घटपदेन नानाघटोपस्थापनसम्भवात् । सकृदुच्चरित इत्यादिनियमाभावात् । अन्यथा पचतीत्यादावप्येकशेषापत्तेः । गङ्गायां घोषमत्स्यौ स्त इत्याद्यनुरोधेन युगपद्वृत्तिद्वयविरोधस्याप्यनङ्गीकारादेकेन हरिपदेन सिंहत्वविष्णुत्वाभ्यां बोधसम्भवात् हरी इत्यादौ नैकशेषः । हरिहरी इत्यादिद्वन्द्वाभावस्तु पदसारूप्यस्यापि द्वन्द्वानियामकत्वात् । वस्तुतस्तु "सरूपाणामेकशेष एकविभक्ताविति" सूत्रं एकविभक्तौ वचनभेदे एकशेषविधायकतया सार्थकम् । नच सविभक्तिकस्य द्वन्द्वो निर्विभक्तिकस्यैवैकशेष इति नेदं युक्तम् । द्वन्द्वविषयेऽप्रवृत्तौ द्वन्द्वापवादकत्वायोगात् । प्रातिपदिकोत्तरविभक्तेरावश्यकत्वे निर्विभक्तिकप्रातिपदिकद्वयासम्भवात् । अन्यथा द्वन्द्वादिसमासो निर्विभक्तिकस्यैव स्यादित्यूचुर्जयरामादयः ।

अत्रेदं वक्तव्यम्–द्वन्द्वापवादैकशेष इत्यत्र न्यायोऽनुशासनं वा बीजम् । नाद्यः । तादृशन्यायस्यानुपलब्धेः । फलाभावाच्च । नान्त्यः । सरूपैकशेषानङ्गीकारादित्यादिवदता ऽनुशासनानङ्गीकारात् । यदपि पचन्तीत्यादावपि एकशेषापत्तेरित्युक्तम् । तदपि न । तत्रेष्टापत्तौ दोषाभावात् । अथ वा ऽऽख्यातभिन्ने तत्स्वीकारात् । यद्वा अत्र कस्यैकशेष आपाद्यते। प्रत्ययान्तस्य, प्रकृतेर्वा । नाद्यः । अनुशासनेन हि विभक्तौ प्रकृतिभागस्य तद्विधा-

नात् । नान्त्यः । प्रकृत्यर्थानेकत्वबोधको हि सः । नच पचधातौ तत्सम्भवति क्रियायां विभक्त्यर्थसंख्यान्वयायोगात् ।

यदपि हरिहरौ इत्यादिद्वन्द्वाभावस्तु यदा सारूप्यस्यापि द्वन्द्वनियामकत्वादित्युक्तम् । तदपि न । जननीवाचिपरिच्छेतृवाचिनोर्मातृशब्दयोः सारूप्येऽपि द्वन्द्वदर्शनात् । यदपि नचेत्यादिना निर्विभक्तिकैकशेषे द्वन्द्वापवादकत्वायोगादित्यादिना दूषणाभिधानं, तदपि न । सविभक्तिकैकशेषस्वीकारेऽपि द्वन्द्वापवादकत्वायोगस्य तदवस्थत्वात् । यदा सारूप्यस्य द्वन्द्वनियामकत्वादिति पूर्वं भवद्भिरेवोक्तत्वात् । असाहित्ये द्वन्द्व इति नैयायिकनव्यमते द्वन्द्वापवाद एकशेष इत्यस्य फलाभावाच्च । प्रक्रियायां निर्विभक्तिकप्रातिपदिकानेकत्वे बाधकाभावेन निर्विभक्तिकप्रातिपदिकद्वयासम्भवाच्चेति दूषणस्य परास्तत्वात् , निर्विभक्तिकैकशेषो निबार्धः । यदपि निर्विभक्तिकप्रातिपदिकानेकत्वसम्भवे द्वन्द्वसमासो निर्विभक्तिकस्यैव स्यादिति निरङ्कुशकुशलैरुक्तम् । तदपि न । तद्विधायकानुशासनाभावात् । किञ्च सविभक्तिकैकशेषे शिष्यमाणे एकवचनश्रवणप्रसङ्ग इत्यादिदूषणानि ग्रन्थभूयस्त्वभयान्नेह तन्यन्ते ।

अत्र वैयाकरणाः । एकशेषस्य द्वंद्वापवादकत्वात्साहित्यप्रकारकबोधस्यानुभवाच्च साहित्यविशिष्टे शक्तिः । अतएव साहित्यप्रकारकबोधे एकशेषः, तदभावे तन्त्रम् , पुनः पुनरनुसन्धाने आवृत्तिरिति तद्भेदव्यवहारोऽप्युपपद्यते । तत्र तन्त्रं द्विविधम् । शब्दतन्त्रम् , अर्थतन्त्रञ्च । अर्थभेदाच्छब्दभेद इति नये सकृत्ताल्वोष्ठपुटव्यापाराच्छब्दोच्चारणे श्रोतुर्यत्र विनिगम-

---

१, द्वन्द्वेत्यारभ्य—सविभक्तिकैकान्तः पाठो ख० पु० नास्ति ।

नाविरहाच्छब्दद्वयज्ञानं तत्राद्यम् । अर्थभेदेऽपि शब्दैक्यमिति नये सकृत्तालत्वोष्ठपुटव्यापारात्प्रकाशितैकशब्देन विनिगमकाभावादनेकार्थबोधे द्वितीयम् ।

ननु द्वंद्वैकशेषयोः सविभक्तिकनिर्विभक्तिकभेदसत्त्वात्कथमेकशेषस्य द्वंद्वापवादकतेति चेन्न । यद्येकशेषो न स्यात्तदा विभक्त्युत्पत्तौ द्वंद्वः स्यात् । कृते त्वेकशेषेऽनेकाभावादप्राप्तिरित्येवं रूपापवादत्वात् । यत्तु द्वंद्वे इत्यस्य साधारणत्वेन समाहारद्वंद्वविषये एकशेषो बोध्यः । अतएव घटघटमिति प्रयोगो न । अन्यथा समाहारद्वंद्वविषये एकशेषाभावेन दुर्वारो द्वंद्वोऽत्र स्यादित्यूचुर्वैयाकरणनव्याः । तन्न । द्वित्वबहुत्वविवक्षायां समाहारैकशेषे घट इति प्रयोगापत्तेः । तस्माच्छब्दशक्तिस्वाभाव्यादेकशेषविषयेऽपि साहित्यविशेष्यको बोधो नास्त्येवेत्येवं सारम् । तथा च न पूर्वोक्तानुपपत्तिः । केचित्तु साहित्यं नाम सेनावनादिवदपेक्षाबुद्धिविषयत्वम् । इतरसाहित्यबुद्धिरेव चापेक्षाबुद्धिः । अपेक्षते सापेक्षा साहित्यं तद्विषया बुद्धिरित्यर्थात्कर्मण्यङित्याहुः ।

नन्वेकशेषवीप्साद्विर्वचनयोः को भेद इति चेत्, द्विर्वचने प्रत्येकमेव व्यापकसम्बन्धप्रतीतिः । ब्राह्मणाय ब्राह्मणाय शतं देहीत्यादौ । एकशेषे तु ब्राह्मणेभ्यः शतं देहीत्यादौ प्रत्येकमेवेति न नियमः । तत्र वीप्साद्विर्वचने क्वचिदुद्देश्यतावच्छेदकव्यापकत्वं विधेये प्रतीयते । यथा पूर्वोदाहृते । तत्र बुद्धिस्थब्राह्मणाभिन्नोद्देश्यकं शतकर्मकं दानमिति बोधः । क्वचिद्विधेयव्यापकत्वमुद्देश्ये । ब्राह्मणेभ्यः शतं देहीत्यादौ । क्वचित्स्फुटं प्रतीयते उभयोरपि द्वित्वम्

१. घटामिति ख० पु० पाठः ।
२. शतं शतमिति ख० पु० पाठः ।

यथा ब्राह्मणाय ब्राह्मणाय शतं शतं देहीत्यादौ । एकैकस्य शतं शतमिति च । गजे गजे न मौक्तिकमित्यादौ गजव्यापकत्वाभावो मौक्तिके बोध्यते । शशे न शृङ्गमित्यादौ शशव्यापकत्वं शशाधिकरणशृङ्गसत्ताभावो बोध्यते । अत्रेदं बोध्यम् । यत्र यत्पदे वीप्सा तत्र न तत्पदे सा वीप्सितस्यार्थस्य विशिष्टस्य तत्पदेन परामर्शसम्भवात् ।

अतएव "कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत्" इत्यकथितश्चेति सूत्रे भाष्ये । नचैवं "व्यञ्जनानि यस्य यस्याचः कार्यमुच्यते तं तं भजन्ते" इत्यजादेरिति सूत्रस्थभाष्यप्रयोगासङ्गतिः । तत्रैकतरत्रापि द्वित्वाभावात् । किन्तु भिन्नभिन्नौ यत्तच्छब्दौ भिन्नभिन्नेनैव रूपेण बुद्धिस्थतत्तत्पदार्थपरामर्शकाविति सप्तमे काव्यप्रकाशे स्फुटम् । केचित्तु स्पष्टत्वाय क्वचित्तत्पदेऽपि वीप्साद्विर्वचमिच्छन्तीति दिक् ।

इति समासार्थनिरूपणम् ।

अथ स्त्रीप्रत्ययादीनामर्थो निरूप्यते । तत्र टाबादयः स्त्रीत्वस्य द्योतकाः । न तु वाचकाः । प्रकृत्यैवोक्तत्वात् ।

यत्तु न च प्रातिपदिकार्थ एव स्त्रीत्वम् । तस्य च तदर्थ एव जात्यादिमति विशेषणत्वेनान्वयः । स्त्रीप्रत्ययास्तु द्योतकाः । लिङ्गस्य च प्रातिपदिकार्थत्वमावश्यकमेव । नात्र ब्राह्मणः, अपि तु ब्राह्मणीत्यादौ पुंस्त्वबोधकपदाभावेन तद्बोधानुपपत्तेः । ब्राह्मणादिपदाच्च जात्यादेर्द्रव्यस्य च भानं नियतमेव । लिङ्गभानन्तु तात्पर्ययोग्यताधीनं काचित्कम् । ब्राह्मणीत्यादौ पुंस्त्वाद्यबोधादिति वाच्यम् । उक्तयुक्त्या पुंस्त्वस्य प्रातिपदिकार्थत्वेऽप्यनन्तानां प्रातिपदिकानां स्त्रीत्वार्थकत्वे गौरवात् । लाघवेना-

स्त्रीप्रत्ययानां तदर्थकत्वकल्पनौचित्यात् । अत एव स्त्रीत्वसंग्रहाय प्रातिपदिकार्थेत्यादिसूत्रे लिङ्गग्रहणं कृतम् । अन्यथा प्रातिपदिकार्थ एव तदन्तर्भावेन पृथक् तदुपादानानुपपत्तेः ।

क्वचित् स्त्रीप्रत्ययः स्त्रियाः भार्यात्वेन विशेष्यतया बोधयति । शूद्रीत्यादौ भार्यात्वं सम्बन्धविशेषः । तत्रैव निरूपकत्वेन प्रकृत्यर्थान्वयः । स्त्रीत्वञ्च योनिमत्त्वम् । खट्वाटवीदेवतादिपदे च स्त्रीप्रत्यया नार्थबोधकाः ।

तत्र प्रकृत्यर्थे योनिमत्त्वस्त्रीत्वस्यायोग्यतयाऽनन्वयादित्याहुर्गदाधरादयः । तन्न । श्रीः इत्यादौ स्त्रीप्रत्ययाभावेऽपि स्त्रीत्वस्य प्रातिपदिकमात्रादपि प्रतीतेस्तस्यापि स्त्रीत्वार्थकत्वं प्रत्ययस्य चेति विपरीतगौरवापत्तेः । किञ्च स्त्रीप्रत्ययादीनां स्त्रीत्वार्थकत्वेन च स्त्रियामजिति स्त्रियामाचि विहिते व्याक्रोशीत्यादौ "उक्तार्थानामप्रयोगः" इति ङीप् न स्यात् । अपि च अजेत्यादौ स्त्रीत्वस्य प्रकृत्यर्थविशेषणत्वेनान्वयो न स्यात् । प्रकृत्यर्थप्रत्ययार्थयोः प्रत्यार्थस्य प्राधान्यात् । नचेष्टापत्तिः । टाबादयः स्त्रीत्वं विशेषणतया बोधयन्तीति स्वग्रन्थविरोधात् । स्त्रीत्वाविशिष्टाजेत्यनुभवविरोधाच्च । लिङ्गग्रहणस्य प्रत्याख्याततत्वेन तस्य वाचकत्वसाधकोपन्यासवैयर्थ्याच्च ।

यदपि शूद्रीत्यादौ भार्यात्वेन बोध इत्युक्तम् । तदपि न । न हि तत्र भार्यात्वेनैव बोधः । अपि तु कन्यात्वेनापि । पुंयोगस्योभयत्रापि अविशेषात् । यदपि स्त्रीत्वञ्च योनिमत्त्वमित्युक्तम् । तत्रेदं वक्तव्यम् । किमिदं स्त्रीत्वं स्त्रियामित्यत्र विवक्षितमुत शास्त्रीयम् । नाद्यः । खट्वाटवीत्यादौ योनिमत्त्वस्त्रीत्वाभावेन स्त्रियामित्यधिकृत्य विहितटाबादीनामनुत्पत्तिप्रसङ्गात् । दारशब्देन च तादृशस्त्रीत्वसत्त्वेन तदुत्प-

त्तिप्रसङ्गात् । नान्त्यः । खट्वाटवीत्याद्यनन्वयादित्यन्तस्वोत्तर-ग्रन्थविरोधात् । किञ्च टाबादीनामनर्थकत्वकल्पनमनुचितमेव । "सम्भवत्यर्थसाधुत्वे शब्दसाधुत्वस्यन्याय्यत्वमिति" न्यायविरोधात् ।

वैयाकरणैस्तु लिङ्गप्रयुक्तकार्यविधौ शास्त्रीयमेव लिङ्गं गृह्यते ।

यत्तु तत्र लौकिकेऽसम्भवे शास्त्रीय एव, तत्सम्भवे तु सामानाधिकरण्यसम्बन्धेन शास्त्रीयविशिष्टे लौकिके, न तु केवललौकिके, नापि केवलशास्त्रीये इत्यूचुर्वैयाकरणनव्याः। तन्न। मक्षिका इत्यत्र लौकिकसम्भवेन पुंमक्षिके टाप् न स्यात् ।

ननु पशुना यजेतेत्यादौ शास्त्रीयपुंस्त्वस्योभयसाधारण्येन पुंस्त्वस्य विवक्षितत्वान्न स्त्रिया याग इति मीमांसकोद्घोषः कथं सङ्गच्छतेति चेन्न । छागो वा मन्त्रवर्णादिति षष्ठान्त्याधिकरणेन तन्निर्णयात् । शास्त्रीयमपि लिङ्गं लौकिकलिङ्गवच्छाब्दबोधे भासते । तथैवानुभवात् । कोशादिप्रामाण्याच्च । भाष्ये तु सत्त्वादीनामुपचयापचयस्थितिरूपं पुंस्त्वस्त्रीत्वनपुंसकत्वमुक्तम् ।

इति स्त्रीप्रत्ययार्थनिरूपणम् ।

अथ तद्धितार्थो निरूप्यते । तत्राग्नेयमित्यादौ देवताविशिष्टं देयं प्रत्ययार्थः पृथग्वा । तत्र प्रकृत्यर्थस्याभेदेनान्वयः । तथा चाग्न्यभिन्नदेवतासम्बन्धीति बोधः । अथवाग्निवृत्तिदेवतात्वनिरूपकप्रदेयमिति बोधः । प्रदेये देवतात्वनिरूपकतासम्बन्धेनान्वयः ।

नन्वेवं—तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।
देवतासम्मतिस्तत्र दुर्बलन्तु परं परम् ॥

इति मीमांसकोक्तं दौर्बल्यं कथमिति चेत् । इत्थं त-

द्धिते श्रुत्या चतुर्थ्या वाक्याद्देवतासम्बंन्धी[1] । तथा च श्रुतिलिङ्गवाक्येत्यादिना बलाबलत्वम् । ताद्धिते एकार्थीभावस्वीकाराच्छ्रुतित्वम् । ब्राह्मणवदधीते इत्यादौ ब्राह्मणप्रतियोगिकसादृश्यस्याध्ययनक्रियायामसम्भवात्तत्कर्तृकाध्ययने लक्षणा । तथा च ब्राह्मणकर्तृकाध्ययनप्रतियोगिकसादृश्यवदध्ययनमिति बोधः । रोदितीव गायतीत्यादौ न वतिप्रत्ययः । अप्रातिपदिकत्वात् । किञ्च सादृश्यविशेष्यकबुद्धिं प्रति नामजन्योपस्थितेर्हेतुत्वात् , न तत्र सादृश्यमिवार्थः । किन्तु सम्भावनात्मिकोत्प्रेक्षैव । तदुक्तम् सन् सूत्रे भाष्ये-नहि तिङन्तेनोपमानमस्ति । अरविन्दवत्सुन्दरं मुखमित्यत्र भवतिक्रियाध्याहारः। तथाच सुन्दरारविन्दभवनसदृशं सुन्दरमुखभवनमिति बोधः । ब्राह्मणेन तुल्यास्य गौरित्यत्र न वतिः । उपमेयस्य क्रियात्वे तस्य प्रवृत्तेः । तत्र तस्येति वतिस्तु गुणादितुल्येऽपि ।

मथुरावत् पाटलिपुत्रके प्राकारः । मथुराप्रतियोगिकसादृश्यवत्पाटलिपुत्रके प्रकार इति बोधः । अत्र मथुरादिपदं लाक्षणिकम् । अस्मादेव ज्ञापकात्प्रथमार्थे सप्तमी । एवं षष्ठ्यपि । अथवा मथुरायामित्यत्र प्राकाराध्याहारो बोध्यः । तथाच प्राकारनिरूपिताधिकरणत्वे सप्तमी । विधिवत्पूज्यत इत्यत्र विधिकर्मकयोग्यताकर्तृहरिकर्मकदेवदत्तव्यापारजन्यं पूजनमिति बोधः । आनन्दमय इत्यत्र प्रचुरानन्दः । अथवा प्रचुरानन्दवानिति बोधः । तत्प्रकृतिवचने मयडित्यत्र भावेऽधिकरणे वा ल्युट् । नान्वानन्दमयशब्देन ब्रह्मोच्यते । तस्य निर्धर्मकत्वादानन्दरूपत्वेन तदधिकरणत्वाभावाच्च कथं मयडिति चेन्न[2] । निर्धर्मकस्यापि व्याव-

---

१. सम्बन्धः इति ख० पु० पाठः ।

२. नचेति क० पु० पाठः ।

हारिकप्राचुर्यपदार्थत्वात्। राहोः शिर इत्यत्र षष्ठ्या इवैकत्वेऽपि आधाराधेयभावो बोध्यः। अतएव "विकारशब्दान्नेति चेत्प्राचुर्यादिति" व्याससूत्रम्। अथवा तदिति योगविभागात्स्वार्थे मयट्।

इति तद्धितार्थनिरूपणम्।

अथ वाचकतायाः स्फोटैकनिष्ठत्वात्ते निरूप्यन्ते। वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः, इत्थं पञ्च व्यक्तिस्फोटाः। वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोटः। इत्थमष्टौ स्फोटाः।

सिद्धान्ते वाक्यजातिस्फोटः। स्फुटत्यर्थो यस्मादिति स्फोटः। वाचक इति यावत्। तत्र प्रकृतिप्रत्यययोः पृथगर्थोपस्थापकत्वे वर्णस्फोटः। अयं तु नैयायिकानामपि सम्मतः। यत्र तु वस्नसादौ प्रकृतिप्रत्ययाज्ञानं तत्र पदस्फोटः। एवं हरेऽवेत्यादौ पदयोर्विभागेनाज्ञानं तत्र वाक्यस्फोटः। एवमेकं पदमेकवाक्यमित्यबाधितप्रतीत्या वर्णावर्णातिरिक्तं वर्णव्यङ्ग्यं पदं वाक्यं चावश्यं स्वीकार्यम्। तदेव वाचकमित्यखण्डपदवाक्यस्फोटौ।

यत्त्वत्र नैयायिकाः। पदघटकीभूततावद्वर्णव्यङ्ग्यः, तावतां मध्ये यत्किञ्चिद्वर्णव्यङ्ग्यो वा स्फोटः। नाद्यः। तृतीयक्षण वृत्तिध्वंसप्रतियोगिनां तदधिकरणक्षणध्वंसाधिकरणक्षणोत्पत्तिकानां वर्णानामेकक्षणावस्थायिरूपमेलनासम्भवात्। नान्त्यः। वर्णानां नार्थप्रत्यये उपयोगित्वम्। किन्तु स्फोटप्रत्यये एव। तस्य यत्किञ्चिदेकवर्णेनैवोपपत्तेर्वर्णान्तरोपादानस्य वैयर्थ्यात्। अथ पूर्वपूर्ववर्णगोचरसंस्कारसहितश्चरमवर्णोपलम्भस्तद्व्यञ्जक इति चेत्तर्हि स एवार्थप्रत्यायकोऽस्तु, कृतं स्फोटेन। अथ नाना-

---

१. अयं तु नैयायिकानामपि सम्मत इति ख०पु० अधिकः पाठः।

र्थप्रत्ययानुपपत्त्या तत्सिद्धिः। किन्तु पदप्रतीतिबलादिति चेन्न । आनुपूर्वीविशेषविशिष्टतावद्वर्णरूपस्यैव पदत्वात् । आनुपूर्वीविशेषश्च ह्योतराव्यवहितत्वम् । अव्यवहितोत्तरत्वञ्च तद्व्यक्तिध्वंसाधिकरणध्वंसानधिकरणत्वे सति तद्व्यक्त्यधिकरणध्वंसाधिकरणीभूतो यः क्षणस्तदुत्पत्तिकत्वम् ।

यद्यप्येतस्य तत्तद्व्यक्तिघटितत्वादननुगमस्तथापि स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वव्यवतटत्वं बोध्यम् । तेन घचटेत्यतो न घटार्थप्रत्ययः । नवा नदीदीन,सरोरस,जरोराजेत्यादीनामविशेषापत्तिरित्याहुः । तन्न । सोऽयमित्यबाधितप्रतीत्या "शब्दो नित्यः व्योमैकगुणत्वात् परिमाणवत्" इत्यनुमानेन च वर्णानां नित्यत्वे सिद्धे उत्पन्नो गकारः विनष्ट इत्यनित्यत्वसाधकप्रतीत्योर्भ्रमत्वकल्पनात् । नच लाघवात्प्रतीतिद्वयभ्रमकल्पनापेक्षया सोऽयमित्येकप्रतीतेरेव भ्रमत्वं कल्प्यत इति वाच्यम् । अनन्तप्रागभावतद्ध्वंसकल्पने विपरीतगौरवापत्तेः । तस्मादात्मन आकाशसम्भूत इत्यादिश्रुत्याकाशस्यापि उत्पत्तिप्रलयश्रुत्याकाशस्यापि अनित्यत्वप्रसङ्गः । नच सम्भूत इत्यस्याविर्भूत इत्यर्थः । वर्णेष्वपि तथा वक्तुं शक्यत्वात् । तथा चोत्पन्नो नष्ट इति प्रतीत्या वर्णेष्वनित्यत्वमाकाशे नेति न युक्तिमत् । अत एव भाष्यकारप्रभाकारभट्टानां वर्णेषु नित्यत्वव्यवहारः । एवञ्च मेलनासम्भवादिति पूर्वोक्तदूषणमपास्तम् ।

नन्वस्तु वर्णानां नित्यत्वं तथापि फलाभावात्तदतिरिक्तः स्फोटो न स्वीक्रियत इति चेन्न । तदेवेदं घटपदं तदेवेदं वाक्यमित्यबाधितप्रतीत्या तत्सिद्धिः । अन्यथा घटपदादीनामप्यवयवातिरिक्तावयवसिद्धिप्रसङ्गः । नचेष्टापत्तिः । भवत्सिद्धान्तभङ्गापत्तेः । इत्थं निरूपिताः पञ्च व्यक्तिस्फोटाः । वोपदेवेन

तु शक्ततावच्छेदिका जातिरेव वाचिकेत्युक्तम्। जातिश्चाविच्छेदको धर्मविशेषः। तथा च वर्णजातिस्फोटः, पदजातिस्फोटः, वाक्यजातिस्फोट इति तन्मते स्फोटत्रयम्[१]।

इति श्रीमन्मौनिकुलतिलकायमान गोवर्द्धनभट्टात्मज-
रघुनाथभट्टसुतश्रीकृष्णभट्टविरचिता
वृत्तिदीपिका समाप्ता।

---

१. प्राङ्निर्दिष्टस्य विशेषणत्वम्। चरमनिर्दिष्टस्य विशेष्यत्वम् इति क० पु० अधिकः पाठः

श्रीः ।

## वृत्तिदीपिकायामुपन्यस्तानां ग्रन्थकारनाम्नां

# सूचीपत्रम् ।



---

१. अत्र मिश्रपदेन आलोकाख्यतत्त्वचिन्तामणिटीकाकारः पक्षधरमिश्रो ग्रन्थकृत्सम्मत इति प्रतिभाति ।

२. प्राभाकरपदेन प्रसिद्धमीमांसकमतानुयायिनो ज्ञेयाः ।

३. अत्र दीक्षितपदेन तर्कप्रकाशाख्यन्यायसिद्धान्तमञ्जरीटीकाकारः श्रीकण्ठदीक्षितो ग्रन्थकारसम्मत इति प्रतिभाति ।

४ अत्र प्रभाकरभट्टस्तु रसप्रदीपकार इति भाति ।

श्रीः ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| निरूपित एतदर्थ | निरूपितैतदर्थ | १ | १६ |
| सङ्केतित्वम् | सङ्केतितत्वम् | ३ | १२ |
| अयि | अइ | ४ | ८ |
| लक्षणथो | लक्षणयो | ८ | ७ |
| औषधि | ओषधि | ९ | १४ |
| व्याधातात् | व्याघातात् | १२ | ३ |
| तझिन्नत्वे | तद्भिन्नत्वे | १२ | ६ |
| लक्षणयैबो | लक्षणयैवो | १२ | २२ |
| घञादिभिश्च | घञादिभिश्च | १९ | १८ |
| यत्र | यत्न | २० | ७ |
| अभदेन | अभेदेन | २२ | १८ |
| मुच्चारयित | मुच्चारयितृ | २५ | २१ |
| यजये | यजेय | २९ | ८ |
| सज्ञा | सञ्ज्ञा | ३५ | १३ |
| घटस्य | घटस्य | ३६ | १२ |
| भिधीये | भिधेये | ३७ | १८ |
| निर्वाधाया | निर्बाधायाम् | ३७ | २४ |
| वृक्षवृत्ति उपरि | वृक्षवृत्त्युपरि | ३८ | १४ |
| भार्यया | भार्याया | ४१ | १५ |
| वृध्यादि | वृद्ध्यादि | ४२ | ३ |
| अग्निषोमौ | अग्नीषोमौ | ४२ | ६ |
| इन्द्राग्नीत्यादा | इन्द्राग्नी इत्यादा | ४२ | ६ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| घटपदेन | घटपदेन | ४३ | ८ |
| निवार्धः | निर्बाधः | ४४ | १४ |
| वीप्सादुद्धि | वीप्साद्धि | ४५ | १८ |
| ग्रन्य | ग्रन्थ | ४८ | ३ |
| सङ्गच्छतेति | सङ्गच्छत इति | ४८ | १४ |
| पुस्त्व | पुंस्त्व | ४८ | १७ |
| प्रदयमिति | प्रदेयमिति | ४८ | २२ |
| नान्वान | नन्वान | ४९ | २२ |
| आधाराधये | आधाराधेय | ५० | ३ |
| वाक्यफोटः | वाक्यस्फोटः | ५० | ८ |
| प्रभाकार | प्रभाकर | ५१ | १९ |
| प्राङ्गिर्दिष्टस्य | प्राङ्निर्दिष्टस्य | ५२ | ८ |

यासामशुद्धिशुद्धीनामवलोकनमात्रेणावगतिर्भवति तासां प्रदर्शनमनावश्यकमिति परिहृतम् ।

---

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvālī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopinath Kaviraj, M.A. Rs. 1–12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa,
Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1–12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī.
Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1–12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2–0

No. 5—The Rasasāra, a Commentray on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–2

No. 6—(Part I)–The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0–12

No. 6–(Part II)—Ditto Ditto Rs. 0–12

No. 7–(Part I)–The Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1–8

No 7—( Part II ) Ditto Ditto Rs. 1–4

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagnnātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0–10

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on S'āṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 1-2

No. 10-(Part II)—Do. Do. Rs. 2-12

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by S'aṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya. ( Jñāna Khaṇḍa)
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.
Rs. 0-14

No. 15-( Part-II )—Do. Do. Rs. 2-4

No. 15-( Part III )—Do. Do. Rs. 2-0

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hosing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs 0-14

No. 18-(Part I)-The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath S'armā, M. A. and Baladeva Upādhyāya, M. A. Rs 2-4

No. 19-( Part.II ) Ditto Ditto Rs. 2-12

No 19—( Part. III ) Introduction etc. ( In Preparation. )

No. 20-The Mānsatattvaviveka by Viśvanātha Nyāyapañchānana Bhaṭṭāchārya.
Edited with Introduction etc. by P. Jagannātha S'āstri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 0-12

No. 21-( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Pañchānana Bhaṭṭāchārya,
Edited with Introduction etc. by Mangal Deva S'āstrī M. A., D. Phil. ( Oxon ), Librarian, Govt. Sanskrit Library, Sarasvati Bhavana, Benares. Rs. 1-2

No. 21-( Part-II ) Ditto Ditto Rs. 2-0

No. 22-The Dharmānubandhi S'lokachaturdaśī by S'ri S'eṣa Kṛṣṇa with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Saraswati Bhavana, Benares.

No. 23-Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed. with Introduction etc. by Vaijanātha S'āstrī Varakale, Dharmaśāstra-S'āstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares.

No. 24–The S'rī Rāmatāpinīyopaniṣad with the Commentary called Rāma Kāśikā in Pūrvatāpinī and Ānandanidhi in Uttaratāpinī by Ānandavana.
Ed. with Introduction etc. by Anantarāma S'āstrī Vetāla Sāhityopādhyāya, Post–Āchārya Scholar, Govt. Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs 3–12

No. 25–The Sāpiṇḍyakalpalatikā by Sadāśivadeva alias Āpadeva with a commentary by Nārāyaṇa Deva.
Edited with Introduction etc. by Jagannātha S'āstrī Hośiṅga, Sāhityopādhyāya, Sādholāl Research Scholar, Govt. Sanskrit College, Benares. Rs 1–4.

No. 26–The Mṛgāṅkalekhā Nāṭikā by Viśvanātha Deva Kavi.
Edited with Introduction etc. by Nārāyaṇa Sāstri Khiste Sāhityāchārya, Asst. Librarian, Government Sanskrit Library, Benares. Rs. 1–0

No. 27–The Vidvachcharita Pañchakam By Nārāyaṇa S'āstri Khiste, Sāhityacharya, Assistant Librarian, Govt. Sanskrit College, Library, Sarasvati Bhavana, Benares. With an Introduction by Gopināth Kaviraja, M. A., Principal, Govt. Sanskrit College, Benares. Rs 2–0

No. 28–The Vrata Kos'a by Jagannātha S'āstri Hosiṅgā Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. With a Foreword by S'rī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs 4–0

No. 29–The Vṛitti dīpikā By Mauni S'rī Kṛṣna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara S'astri Bharadvaja Professor, Govt. Sanskrit College Benares.

No. 30–The Padārtha Maṇḍanam By S'rī Veṇīdatta.
Edited with Introduction etc by Pandit Gopāla S'āstri Nene, Professor, Govt. Sanskrit College, Benares.

No. 31 ( Part I )–The Tantraratna by Pârtha Sarathi Mis'ra.
Edited by M. M. Dr. Ganganatha Jha, M. A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad.

# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1) : its Evolution, by Gaṅgānātha Jhā.

(b) The View-point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopinath Kaviraj. Rs. 1-12

Vol. II—

(a) Paraśurāma Miśra alias Vāṇī Rasāla Rāya, by Gopinath Kaviraj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) S'tudies in Hindu Law (2):—its sources, by Gaṅgānāth Jha

(d) A New Bhakti Sūtra, by Gopinath Kaviraj.

(e) The System of Chakras according to Gorakṣa nātha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka nātha S'armā.

(h) A Seventeenth Century Astrolabe, by Padmākara Dvivedi

(i) Some aspects of Vīra S'aiva Philosophy, by Gopinath Kaviraj

(j) Nyāya Kusumāñjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Nārāyaṇā S'āstri Khiste.

(l) Sondala Upādhyāya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(b) Studies in Hindu Law (3): Judicial Procedure: by Gaṅgānātha Jha.

(c) Theism in Ancient India, by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaiśeṣika Literature, by Gopinath Kaviraj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.

(f) Indian Dramaturgy, by P. N. Pātankar. Rs. 5

Vol. IV—

(a) Studies in Hindu Law (4): Judicial Procedure: by Gaṅga natha Jha.

(b) History and Bibliography of Nyaya Vaiśeṣika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Ṛgveda–Prātiśakhya, by Kaṅgala Deva S'āstrī.

(d) Nārāyaṇa's Gaṇita kaumudī, by Padmakara Dvivedi.

(e) Food and Drink in the Ramayanic Age, by Manmatha natha Roy

(f) Satkaryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj

(g) Discipline by Consequences, by G. L. Sinha.

(h) History of the origin and expansion of the Aryans. by A. C. Ganguly.

(i) Punishments in Ancient Indian Schools, by G.L. Sinha. Rs 5

Vol. V—

(a) Ancient Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Rāmayaṇa, by Manmatha nātha Roy.

(d) A Comparison of the Contents of the Ṛgveda, Vajasaneya, Taittirīya & Atharvaveda Prātiśakhyas, by Maṅgala Deva S'astri.

(e) Formal Training and the Ancient Indian Thought, by G.I Sinha.

(f) History and Bibliography of Nyaya Vais'eṣika Literature, by Gopinath Kavirāj.

(g) A Descriptive Index to the names in the Ramayaṇa, by Kanmatha nāth Roy.

(h) Notes and Queries, (1) Virgin Worship, by Gopinath Kaviraj. Rs. 5

Vol. VI—

(a) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob..

(b) Some Aspects of the History and Doctrines of the Nāthas, by Gopinath Kaviraj.

(c) An Index etc. the Ramayana, by Manmatha nātha Roy.

(d) Studies in Hindu Law by M. M. Gaṅganatha Jha

(e) The Mimamsa manuscripts in the Govt. Sanskrit Library (Benares) by Gopinātha Kavirāj.

(f) Notes and Queries, by Gopinātha Kavirāj.

Vol. VII.

(a) Bhamaha and his Kavyalankara, by Batukanatha S'arma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vais'eṣika Sutras, by Gopinātha Kavirāj.

(c) History and Bibliography of Nyâya Vais'eṣika Literature, by Gopinātha Kavirāj.

(d) An attempt to arrive at the Correct meaning of some obscure Vedic words, by Sitāram Joshi.

(e) A comparison of the contents of the Rig Veda, Vajasaneya, Taittiriya, and Atharva Veda (Chāturadhyāyika) Prātis'ākhyas, by Mangal Deva Shāstri.

(f) An Index to the Ramayana, by Manmatha Nāth Roy.

(g) An Index to S'abara's Bhāṣya, by the late Col. J. A Jacob.

(h) Gleanings from the Tantras, by Gopinātha Kavirāj.

(i) The date of Madhusudana Saraswati, by Gopinātha Kavirāj.

(j) Descriptive notes on Sanskrit Manuscripts, by Gopinātha Kavirāj.

(k) A note on the meaning of the term of Parārdha, by Umes'a Mis'ra.

Vol. VIII. ( In Progress )

To be had of
The Superintendent
Government Press, U. P.
Allahabad

